रा० च्छिन्नो दोषइत्येवोक्तलक्षणपर्यवसितार्थइत्युपगमादिति तत्रातिव्याप्तिवारणाय प्रकृतानुमितिप्रतिबन्धकतानवच्छेदककिञ्चि
दवच्छिन्नविषयिताशून्यत्वेन तादृशनिश्चयो विशेषणीयः उक्तविशिष्टविषयकनिश्चयश्च तथाविधाधेयतात्वावच्छिन्नविषयिताशा
लित्वेवेति नतत्रातिव्याप्तिः ह्रदो वन्ह्यभाववानिति निश्चयस्यापि तथाविधह्रदत्वप्रकारतानिरूपितनिरवच्छिन्नविशेष्यताशालित्वा
दुक्तं किञ्चिदवच्छिन्नेति यद्यप्येवंसति एकदेशातिव्याप्तिरेकदेशविषयकस्यापि ह्रदो वन्ह्यभाववानिति निश्चयस्यापि तथा

दि० इष्टापत्तेरिति। तथाच सद्धेतूनामप्रतिपरामर्शेपि तदुष्टत्वमितिभावः अन्यथा प्रतिबन्धकीभूतभ्रमविषयत्व

मु० इष्टापत्तेः अन्यथावाधस्याप्यनित्यदोषत्वापत्तेः तस्मात्तत्र वन्ह्यभावव्याप्यपाषाणमयत्ववा
निति परामर्शकाले वन्हिव्याप्यधूमस्यनाभासत्वम् भ्रमादनुमितिप्रतिबन्धमात्रे हेतुस्तु न दुष्टः

स्यापि दोषत्वे अनित्यदोषत्वापत्तेरिति पक्षे साध्याभावभ्रमदशायां सद्धेतावपि दोषत्वापत्तेरित्यर्थः इत्थञ्चयादृशवि
शिष्टविषयकत्वेन ज्ञानस्य प्रतिबन्धकत्वं तादृशविशिष्टस्य दोषत्वे च ॥ ६ श्री श्री ६ ॥ ९ ॥ ६ ॥ ७ ॥ ॥ ० ॥ २ ॥

तथापि निश्चये यद्रूपावच्छिन्नविषयिताघटितविषयिताशून्यत्वमपि निवेश्यस्यापि निरसनीयास्य एकदेशविषयकतादृशनिश्चयस्याप्रसि
द्धेः तादृशविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकत्वमेव तद्घटकमिति ध्येयम् इत्थञ्च जातिमान् वन्ह्यभाववानि
ति ज्ञानवारणायोक्तगुरुतरविशेषणमपिदेयमेवेति तदीयविषयितायाः प्रतिबन्धकतानवच्छेदकत्वादेव तद्वारणसंभवादेवम
न्यत्रान्यत्र ह्रदत्वस्य स्वरसाय द्रूपपदेन वन्ह्यभाववद्ह्रदत्वोभयोपादानेपि न क्षतिः उक्तप्रतिबन्धकज्ञानयोरेतद्विशेषणेनैव वारणात्
तथैव सम्प्रमेयत्वादिविशिष्टव्यभिचारादिति व्याप्तिवारणाय तादृशविशिष्टान्तरघटितत्वनिवेशोपि नोपादेय एतद्दतिम ॥ ६ ॥

का०मु० दि०रा० १५६

रा०। हा लाघवं केचित्तूक्तविशिष्टेऽतिव्याप्तिवारणाय यादृशवैशिष्ट्येति अथैवं स्वरूपसम्बन्धरूपावच्छेदकत्वनिवेशेपि तस्याभावादनति
रिक्तवृत्तित्वनिवेशनमफलमिति चेत्परित्यज्यतां तदपि नावनाप्यनाहार्यत्वादिविशेषणानिवेशेन लाघवातिशयस्यैव सम्पत्तिरिति नव
स्तु न उक्तविशिष्टेऽतिव्याप्तिवारणाय स्वातन्त्र्येणैव प्रतिबन्धकता ———— नवच्छेदककिञ्चिदवच्छिन्नविषयताशून्यत्वानविषयत्वरू
पं विशेषणमुपादेयम् एकदेशादावतिव्याप्तिवारणायाव्यापकविषयिताशून्यत्वादिविशेषितनिश्चयत्वरूपावच्छिन्नविषयत्वमित्यादिवि
शेष्यदलमित्यत्रैव मन्यन्ते तत्तात्पर्यमिति दिक् केचित्तूक्तविशिष्टेऽतिव्याप्तिवारणाय यादृशविशिष्टविषयकनिश्चयविशिष्टयादृशविशि

दि०। हेत्वादिकमित्यादिना साध्याभावविशिष्टपक्षपरिग्रहः यादृशविशिष्टपदेन व्यभिचारत्वादिविशिष्टव्यभिचारादिक
मादाय लक्षणत्वसम्भवनिव्यभिचारविषयकत्वस्य प्रतिबन्धकताशून्ये व्यभिचार इति ज्ञाने वृत्तित्वेनातिरिक्तवृत्तित्वात्तु किं
तु व्यभिचारादिविशिष्टहेत्वादिकमादायैव नित्यव्यभिचारादिविशिष्टहेत्वादिकमेव दोष इति भावः ननु व्यभिचारादिवि

मु०। इत्थञ्च साध्याभाववद्वृत्तिहेत्वादिकं दोषः तद्वत्त्वञ्च हेतौ येन केन सम्बन्धेनेति नव्याः॥

शिष्टस्य हेतोर्दोषत्वेन तद्वत्त्वस्य हेतावभावाद्धेतौ दुष्टत्वव्यवहारो न स्यात् न च तादात्म्येन तद्वत्त्वं विवक्षणीयमिति वा
च्यम् तथा सति वह्न्यभावविशिष्टह्रदादेस्तादात्म्येन धूमेऽभावेन ह्रदपक्षकधूमस्य दुष्टत्वं न स्यादत आह तद्वत्त्वञ्चेति

शविषयकनिश्चयोऽनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतानवच्छेदकतानादृशविशिष्टविषयि
ताद्वयशून्यप्रतीतिविषयत्वेन तादृशविशिष्टो विशेषणीयः विशिष्टद्वयविषयतायां यावत्तामनवच्छेदकत्वविशेषणात् वह्न्यभावvि
षयकनिश्चयविशिष्टवह्न्यभाववद्ध्रदविषयक निश्चयत्वस्यानुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वेपि न वह्न्यभाववद्ध्रदादावसम्भ
वप्रसङ्ग इत्याहुः व्यभिचारत्वादिविशिष्टेति वह्निधूमस्य व्यभिचारी पक्षे साध्यस्य बाध इत्यादिव्यवहारात् साध्याभाववद्वृत्तित्वमाम
स्य व्यभिचारपदार्थत्वे साध्याभाववत्त्वेव बाधपदार्थत्वेन प्रसिद्धतया साध्याभाववद्वृत्तित्वस्यैव प्रकृते व्यभिचारपदार्थतया बोध्या व्यभिचा॥ १५६

रा०। रादिकमित्यादिना साध्याभावरूपबाधपरिग्रहः तादृशविशिष्टाश्रयतद्धेतुत्वस्यैवेति तथाच वन्ह्यभाववद्वृत्तिद्रव्यमितिज्ञान
त्वस्य तद्रूमहेतुकानुमितावप्रतिबन्धकत्वात् तादृशद्रव्यविशिष्टत्वेपि धूमस्य धूमोदुष्ट इति व्यवहारापत्तिरितिभावः ननु तद्धेतुके
ति न च तद्धेतुकत्वं तत्परामर्शोत्तरत्वं तथाचोभयपरामर्शोत्तरं यत्र एकहेतौ व्यभिचारज्ञानं तत्रानुमितिरुभयहेतुकत्वेन तत्र व्य।
भिचार इति वाच्यम् अव्यवहितोत्तरत्वसम्बन्धेन तद्धेतुधर्मिकव्यभिचारज्ञानविशिष्टान्यत्वस्यैव प्रकृते तद्धेतुकरूपत्वादिति प्रकृ।
ज्ञानुमितिप्रतिबन्धकतावच्छेदकमित्यस्य विषयविधेयेत्यादिः तथाच यादृशविषयकत्वमनुमितिप्रतिबन्धकज्ञानतिरिक्तवृत्ति
तादृशविशिष्टान्तराघटितत्वे नैतियादृशविषयविशिष्टविषयकत्वं तथाविधं तादृशविशिष्टो दोष इति पर्यवसितोऽर्थः अघटितत्व
स्य तद्विषयकप्रतीतिविषयत्वरूपत्वेन स्वस्मिन्स्वविषयकप्रतीतिविषयत्वाभावान्न व्यभिचार इत्यन्तरपदं न च न स्वभिन्नार्थकं व्य
भिचारादेः प्रमेयत्वविशिष्टव्यभिचाराभिन्नत्वेनातिव्याप्तिवारणासम्भवात् किन्तु स्वाविषयकप्रतीतिविषयत्वं यद्यपि प्रमेयत्ववृत्तिप्र

मेयत्वादित्याद्यवृत्तित्वाभाववद्वृत्तिप्रमेयत्वरूपव्यभिचारेऽव्याप्तिस्तस्य वृत्तिप्रमेयत्वरूपबाधघटितत्वात् तथापि प्रतिबन्धकताया
मेवविशिष्टान्तरविषयकत्वानवच्छिन्नत्वं देयमव्याप्तिज्ञानप्रतिबन्धकतायां बाधविषयिता व्यापकत्वविरहेणोक्ताव्याप्तिविरहा
दितिविभावनीयम् केचित्तु स्वसजातीयविशिष्टान्तराघटितत्वानिवेशान्नोक्तदोषः बाधस्य हेत्वाभासविभाजकरूपेण व्यभिचारस
जातीयत्वविरहान्न दोष इत्याहुस्तन्न मनोरमम् विशिष्टान्तराघटितत्वं तद्घटितहेत्वाभासविभाजकरूपेणैव साजात्यं विवक्षणी
यम् अन्यथाव्यभिचारविशिष्टप्रमेयत्वादौ हेत्वाभासविभाजकरूपस्यैवाभावेन स्वपदेन तस्योपादातुमशक्यत्वेन विशिष्टान्तराघ
टितेप्रमेयत्वविशिष्टव्यभिचारादितदन्यत्वस्य प्राप्तत्वात्तत्रातिव्याप्त्यापत्तेः तथाच बाधोपि व्यभिचारसजातीय एव विशिष्टान्तराघ
टितत्वानद्घटितबाधत्वस्य व्यभिचारेपि सत्वादिति ध्येयम् यद्विच स्वपदमनुयोगिपरमेव स्वसजातीयं यद्विशिष्टान्तरं तद्वि
षयकप्रतीतिविषयकप्रतीतिविषयत्वमेव लक्षणम् विशेष्यदलं तु नैवोपादेयम् उदासीनघटादेः स्वसजा॥ ९॥ श्री ९॥ ॥

का०मु० रा०।नीयप्रसिद्धेर्वनत्रातिव्याप्तिविरहात् साजात्यमपि सम्पूर्णहेत्वाभासविभाजकरूपेणैव विवक्षणीयम् मेयत्वविशिष्टव्यभि
दि०रा० चारादौ शुद्धव्यभिचारत्वस्यापि सत्त्वेन व्यभिचारस्य तत्सजातीयत्वसम्भवात् इत्थं च व्यभिचारविशिष्टमेयत्वस्य स्वसजातीयाप्रसिद्धेरे
१५७

दि०।न च वह्निव्यभिचारविशिष्टद्रव्यत्वादेर्धूमेपि सत्त्वादतिव्याप्तिरिति वाच्यम् यादृशविशिष्टविषयकज्ञानत्वेन य
द्धेतुकानुमितिप्रतिबन्धकत्वन्तादृशविशिष्टाश्रयतद्धेतुत्वस्यैव दुष्टत्वादिति सत्प्रतिपक्षादेरनित्यदोषत्ववादिनाम्मत
माह परेत्विति ननु वह्न्यभावादिव्याप्तेर्यत्पदेनोपादातुमशक्यत्वेपि तस्या धूमावृत्तितया न धूमस्य दुष्टत्वं स्यादत आह त
द्वत्त्वेति ज्ञानेति एकज्ञानविषयत्वेन तद्वत्त्वमित्यर्थः तद्वत्त्वस्य साध्याभाववत्त्वस्य तत्र बाधकालीन धूमादिसद्धेता

मु०।परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वन्तद्वत्त्वं हेत्वाभासत्वं सत्प्रतिपक्षे विरोधिव्याप्त्यादि
कमेव तथा तद्वत्त्वञ्च हेतौ ज्ञानरूपसम्बन्धेन न चैवं वह्निमान्धूमादित्यादौ पक्षे बाधभ्रमस्य साध्या
भावविषयकत्वेन नानुमितिविरोधित्वात् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात्सद्धेतोरपि बाधितत्वापत्ति
रिति वाच्यम्॥ तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात् अत्र सत्प्रतिपक्षित इति व्यवहारेण तत्कल्पनात् तत्र बा
धित इति व्यवहाराभावादित्याहुः॥ ॥ वित्यर्थः अत्र प्रतिपरामर्शकालीने धूमादिसद्धेतौ तत्कल्पनात् ज्ञान
सम्बन्धत्वकल्पनात् ननु सद्धेतावपि बाधित इति व्यवहारेण सम्बन्धत्वकल्पने ज्ञानस्य भविष्यतीत्यत आह तत्रेति॥
बाधभ्रमकालीने सद्धेतावित्यर्थः प्रत्युतापन्नबाधितः पुरुषस्तु भ्रान्त इत्येव व्यवहारादिति भावः तादृशव्यवहारा
व्यवहारयोः स्वानुभवमात्रसाक्षिकत्वमाहुरित्यस्वरसबीजम्॥ ६॥ ॥६॥ ॥६॥ ॥६॥ ॥७॥ ॥६॥ ॥६॥ ॥६॥

वनातिव्याप्तिरित्युच्यते न तदा मूलविरोधातिरिक्तो नैतन्मते दोष इति ध्येयम् अत्र च प्रमेयत्वविशिष्टव्यभिचारो दोष इति व्यवहाराभावात्॥ श्री

रा०॥ तद्धारणायासौ वोध्यः यद्यपि विशिष्टान्तराघटितत्वनिवेशेऽपि तादृशव्यवहारो दुर्निवारः तथाविधशुद्धव्यभिचारित्वस्यापि तत्र सत्वेन तेन रूपेण तस्य दोषत्वे दृष्टापत्तिसम्भवात् तथा विशिष्टान्तराघटितत्वस्य लक्षणे प्रवेशे तेन रूपेण दोषस्य तावच्छेदकधर्मवोधकत्वनियमोपगमात्

टि०॥ यथाश्रुतविरोधित्वत्यागे वीजमाह तेनेत्यादिना ननु तद्धेतुकतत्साध्यकानुमितिम्प्रति तद्धेतौ तत्साध्यव्यभिचारग्रहाभावो हेतुर्वाच्यस्तत्राह तदभावेति न सन्निति नाव्याप्तिः नन्वत्र लक्षणेऽवच्छेदकत्वन्न स्वरूपसम्बन्धविशेषः पूर्वोक्तदोषादित्यनतिरिक्तवृत्तित्वमेव निवेशनीयन्तथा च धूमवान्वह्नेरित्यादौ प्रमेयत्वविशिष्टव्यभिचारेऽतिव्याप्तिस्तद्विषयकत्वस्य प्रतिवन्धकतानतिरिक्तवृत्तित्वादत आह इतिसंक्षेप इति प्रकृतानुमितिप्रतिवन्धकतावच्छेदकान्तराघटितत्वेनानुमि

मु०॥ अनुमितिविरोधित्वञ्चानुमितितत्कारणान्यतरविरोधित्वम् तेन व्यभिचारिणि नाव्याप्तिः दोष।
ज्ञानञ्च यद्धेतुविषयकन्तद्धेतुकानुमितौ प्रतिवन्धकन्तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणानुमित्यु
त्पत्ते स्तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्य प्रकृतानुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः॥

तिविरोधितावच्छेदकं विशेषणीयम् प्रमेयत्वविशिष्टव्यभिचारस्य प्रकृतानुमितिप्रतिबन्धक—तावच्छेदकीभूतो यो व्यभिचारस्तद्घटितत्वेऽपि न तत्रातिप्रसङ्ग इति दिक् नन्वत्रानुमितितत्कारणज्ञानान्यतरप्रतिवन्धकत्वमन्यतरनिष्ठप्रतिवध्यतानिरूपकत्वघटितं यदि तदा पर्वतो वह्निमान्धूमादित्यादौ वह्न्यभावविशिष्टह्रदस्यापि दोषताप्रसङ्गः तस्य पर्वतो वह्निमान् ह्रदो वह्निमानिति समूहालम्बनात्मकप्रकृतानुमितिनिष्ठप्रतिवध्यतानिरूपितप्रतिवन्धकतावच्छेदकत्वात्॥ ६॥

दोषपरस्त्वमेयत्वविशिष्टव्यभिचारत्वस्य तथात्वान्न तादृशव्यवहारापत्तिरित्यवधेयम्॥ ६॥ ॥ ६॥ ॥ ६॥ ॥ ६॥ ॥ ६॥ ६॥ ६॥॥

का० पु० रा० ननु तादृशान्यतरत्वव्याप्ययत्किञ्चिद्धर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायद्रूपावच्छिन्नविषयिताव्यापिका तद्रू
दि० रा० पावच्छिन्नो दोष इत्युक्तत्वान्न दोषः वस्तुतोऽत्रानुमितिपदस्य पक्षे साध्यव्याप्यहेतूभयविधेयकसमूहालम्बनानुमितिपरत्वेनोनकोऽपि
१५८ दोषः तादृशानुमितित्वव्यापकप्रतिबध्यतानिवेशेन समूहालम्बनानुमितिमादाय दोषवारणासम्भवात् व्याप्तिश्चान्वयतो व्यतिरेकत
श्च निवेश्यते तेन साधारण्यानुपसंहारित्वयोर्नैकतरसङ्ग्रहः इत्यत आह किञ्चेति मूले यादृशसाध्यकेति तद्धर्मावच्छिन्नसाध्यपक्षहे

दि० यदि च तादृशान्यतरत्वावच्छिन्नप्रतिबध्यतानिरूपकत्वघटितं तदा तादृशान्यतरत्वस्य कस्यचित्प्रतिबध्यता
नवच्छेदकतयाऽसम्भवः तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशे च व्यभिचारादौ बाधादौ चाव्याप्तिः व्यभिचारादे
रनुमित्यविरोधितया बाधादेश्च व्याप्तिज्ञानाविरोधितया तत्प्रतिबध्यतायास्तथाविधान्यतरत्वाव्यापकत्वात् किञ्च त
द्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकानुमिति तत्कारणज्ञानान्यतरविरोधित्वं लक्षणं

मू० यादृशसाध्यपक्षहेतौ यावन्तो दोषास्तावदन्यान्यत्वं तत्र हेत्वाभासत्वम् पञ्चत्वकथनं
तु तत्सम्भवस्थलाभिप्रायेण॥

निवेशनीयं अन्यथा पर्वतो वह्निमान् धूमादित्यादौ पर्वतादेः काञ्चनमयत्वाभावो हेत्वाभासः स्यात् एवञ्च निर्वह्निः
पर्वतो वह्निमान् धूमादित्यादौ न कोऽपि हेत्वाभासः स्यात् तादृशानुमितेरप्रसिद्धेरत आह यादृशसाध्येति तत्सम्भवेति वायुर्गन्धवान्
स्नेहादित्यादौ सर्वहेत्वाभाससम्भव इति भावः॥ ९॥ २॥ ७॥ १॥ ऽतुकानुमितित्वेन किमुद्दिश्य न्यायप्रयोगो यद्यद्धर्मावच्छिन्ने
दोषव्यवहारस्सम्प्रदायसिद्धस्तावदन्यान्यत्वं तत्तत्पदोषसामान्यलक्षणमित्यर्थः तेन निर्वह्निः पर्वतो वह्निमानित्यनुमितेरप्रसिद्धा
वपि न क्षतिः एवं च निर्वह्निपर्वते वह्निसाधने बाधो दोष इत्यादिव्यवहारेऽपि निर्वह्निपर्वतोद्देश्यकत्ववह्निविधेयत्वप्र ९॥ १॥ २॥ एम १५८

रा०।कारकानुमितिविषयकेच्छयान्यायप्रयोगेतादृशान्यतमोवाधर्म्मेवार्थः यद्यपिप्रमेयंगगनवदित्यादौगगनाभाववत्प्रमेयभिन्ना ।
प्रसिद्ध्यालक्षणमव्याप्तम्धर्मिणा —— मन्यतमत्वेनैवविशेषेपिप्रमेयपक्षतावच्छेदकस्थलेऽप्रसिद्धितादवस्थ्यम् वन्ह्यभावभिन्नत्वेसति ह्र
दत्वभिन्नोयस्तदन्यत्वस्यकेवलह्रदत्वसाधारण्येनह्रदोदोषइतिव्यवहारापत्तिश्चतथापियद्यद्धर्मावच्छिन्नेदोषव्यवहारस्तदवच्छिन्नवि
षयितान्यतमविषयितानिरूपकतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नोदोषइतिविवक्षयानदोषः एकविधदोषस्थलेपिविशेष
णविशेष्यभावतद्वयाप्यभेदेनान्यतमप्रसिद्धिरवनेया एतल्लक्षणेप्रमेयत्वविशिष्टव्यभिचारादौदोषव्यवहारविरहाद्धिशिष्टान्तराघटित

दि०।हेत्वाभासलक्षणमुक्त्वामूलेवक्ष्यमाणेष्वनैकान्तिकादिलक्षणेषुक्वचिद्दोषेऽहृदिनिधायस्वयमनैकान्तकादीनांलक्षणा
न्याहएवमिति साधारणादीत्यादिना· असाधारणानुपसंहारिणोःपरिग्रहः नन्वेतस्यानुमितितत्करणज्ञानान्यतरविरोधि।

मु०।एवञ्चसाधारणाद्यन्यत —— मत्वमनैकान्तिकत्वम्साधारणःसाध्यवदन्यवृत्तिः तेनचव्याप्तिज्ञानप्रति
वन्धःक्रियते॥ श्लो०६ ॥ ६॥

ज्ञानविषयत्वाभावात्कथंहेत्वाभासत्वमित्यतोदूषकतावीजमाह तेनचेति एवमग्रेपिक्रियतइति व्याप्तिघटकाव्यभिचारां
शेव्यभिचारज्ञानस्यप्रतिवन्धकत्वादितिभावः॥८॥ ९ तन्त्रोपादेयमेव नन्वेतादृशसामान्यलक्षणस्यक्वचिद्दोषदूषसाधारण्येनक्व
चिद्दोषत्वञ्चअसाधारण्येनचहेत्वाभासानाम्पञ्चधाविभागोऽसङ्गतइत्यतआह वायुरित्यादि तथाचतत्तत्स्थलीयदोषसामान्यलक्षणमभि
प्रेत्यैवपञ्चधाविभागोच्चारणमितिभावः क्वचिदिति यस्सपक्षेविपक्षेचेत्यत्रसपक्षवृत्तित्वनिवेशनमनर्थकंविरुद्धस्यानैकान्तिकत्वेऽ।
शापत्तिः धर्मिणएकस्येपिविशेषणभेदेनविशिष्टस्यप्रतिवन्धकज्ञानेविषयितयासाङ्कर्यविरहेणविभागोपपत्तिरितिभावः व्याप्तिघटका
व्यभिचारांशेइति इदञ्चसाध्यवदन्यावृत्तित्वेसतिसाध्यसामानाधिकरण्यम्व्याप्तिरित्यभिप्रायेण व्यापकसामाना॥ श्लो०६॥ ६॥ श्लो०६॥६॥

रा॰ अधिकरण्यस्य व्याप्तित्वेनु स्वसमानाधिकरणाभावप्रतियोगितानवच्छेदक एव साधारणो बोध्यः तदभावज्ञानस्यैव तज्ज्ञाने प्रतिबन्धक
त्वादिति ध्येयम् एकहेत्वाभासत्वानुपपत्तिरिति निश्चितसाध्यवद्वृत्तित्वज्ञानस्य नीलपटादिवृत्तित्वज्ञानस्य घटवत्ताज्ञान इव सा
ध्यसामानाधिकरण्यज्ञाने प्रतिबन्धकताविरहेण दूषकताबीजाभावेनासाधारण्यस्य हेत्वाभासत्वानुपपत्तिरिति भावः ननु केवलान्व

दि॰ प्रतिबध्यत इति व्याप्तिघटकीभूतसामानाधिकरण्यग्रहः प्रतिबध्यत इत्यर्थः एवं साधारणासाधारणानुपसंहारिणा
म्व्याप्तिज्ञानप्रतिबन्धकतारूपदूषकताबीजैक्यैनैकहेत्वाभासत्वमुपपद्यते साधारणेनाव्यभिचारग्रहस्यासाधारणेन सा
मानाधिकरण्यग्रहस्यानुपसंहारिणा च व्यतिरेकव्याप्तिग्रहस्य प्रतिबन्धादिति भावः प्राचीनमतमाह अन्ये त्विति पक्षे साध्य

मु॰ असाधारणः साध्यासमानाधिकरणो हेतुः तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते अन्ये तु सप
क्षावृत्तिरसाधारणः सपक्षश्च निश्चितसाध्यवान् इत्यश्च शब्दो नित्यः शब्दत्वादित्यादौ यदा पक्षे साध्य
निश्चयस्तदानासाधारण्यं तत्र हेतोर्निश्चयादिति वदन्ति अनुपसंहारी च अत्यन्ताभावाप्रतियोगिसा
ध्यकादिः अनेन व्यतिरेकव्याप्तिग्रहप्रतिबन्धः क्रियते विरुद्धस्तु साध्यव्यापकीभूताभावप्रतियोगी अ
यं साध्याभावग्रहसामग्रीत्वेन प्रतिबन्धकः॥ १ सन्देहदशायामेवासाधारणस्य हेत्वाभासता न तु निश्चयद

शायान्तदापक्षस्यैव सपक्षत्वेन निश्चितसाध्यवद्व्यावृत्तत्वाभावादित्यनित्यदोषत्वं तस्येत्याह इत्यश्चेति असाधारण्यघट
कसपक्षत्वस्य निश्चयघटितत्वे चेत्यर्थः तत्र निश्चितसाध्यवति पक्षे साधारणादित्रयाणामेकहेत्वाभासत्वानुपपत्तिर्वदन्ती।
त्यनेनास्वरसः सूचितः व्यतिरेकव्याप्तिग्रहप्रतिबन्ध इति केवलान्वयिसाध्यके चान्वयव्याप्तिज्ञानादेवानुमितिरिति भावः 
यिसाध्यकहेतोर्दुष्टत्वेन तत्साध्यकानुमित्युपपत्तये व्यापकसामानाधिकरण्यमेव व्याप्तिरिति नैयायिकसिद्धान्तो विरुध्यत इत्याशङ्क्याह केवला 
न्वयीति प्रतिबन्धकपदम्प्रतिबन्धकग्रह॥

रा०॥ विषयार्थकं तस्य च केवलान्वयिसाध्यशब्दार्थेऽत्यन्ताभावाप्रतियोगिसाध्येऽन्वयः॥ ॥ ॥भेदो न स्यादिति यद्यपि साध्याभावव्याप्य
वान्पक्षः सत्प्रतिपक्षः विरुद्धस्तु साध्यव्यापकाभावप्रतियोगी प्रकृतो हेतुरिति स्वरूपभेदो वर्त्तत एव तथापि यथासाधारणादीनामपरस्प
रवैलक्षण्येऽपि दूषकतावीजस्यैक्ये नैकहेत्वाभासत्वं तथा सत्प्रतिपक्षविरुद्धयोरपि विरोध्यनुमितिसामग्रीत्वेन प्रतिबन्धकतारूपदूषक।

दि०॥ नन्वेवं साध्याभावसाधकात्सत्प्रतिपक्षाद्विरुद्धस्य भेदो न स्यादित्यत आह सत्प्रतिपक्षे त्विति प्रतिहेतुः प्रतिकूलो द्वि
तीयो हेतुः इति विशेषः इत्यनयोर्भेदः ननु यदि दूषकतावीजैक्येऽपि हेतुभेदे सत्प्रतिपक्षो हेत्वैक्ये विरुद्धरूपहेत्वाभासा
न्तरमित्युच्यते तदा यत्रान्वयिना हेत्वन्तरेण प्रतिरोधस्तत्र सत्प्रतिपक्षो यत्र तु व्यतिरेकिणा तत्र हेत्वाभासान्तरं स्यादतो भेद।

मु० सत्प्रतिपक्षे तु प्रतिहेतुः साध्याभावसाधकः अत्र हेतुरेक एवेति विशेषः साध्याभावसाधक एव हेतुः
साध्यसाधकत्वेनोपन्यस्त इत्याशङ्क्य विशेषोपस्थापकत्वाच्च विशेषः सत्प्रतिपक्षः साध्यभावव्याप्यवानुप
कान्तरमप्याह साध्याभावेति वस्तुगत्या साध्याभावसाधके हेतावेव नवसाध्यसाधकत्वभ्रम इति स्थापनावादिन सः
त्प्रतिभ्रमरूपाऽऽशङ्किसूचकत्वं विरुद्धस्य नन्वेवं सत्प्रतिपक्षस्येति भावः साध्याभावव्याप्येति एवं साध्यवदन्यत्वव्याप्य
वान्पक्षः पक्षनिष्ठो साध्याभावसाध्यवदन्यत्वव्याप्यावपि बोध्यौ अन्यतमत्वादिनाऽनुगमान्न विभागव्याघातः॥

तावीजैक्यादेकहेत्वाभासत्वं स्यादिति भावः बोध्याविति नन्वेवं चतुष्टयस्यानुगतरूपाभावात्कथमेकरूपेणैषां विभागः यदि च सा
ध्याभावबोधकत्वेन विभागस्तदा विरुद्धोऽप्येतन्मध्य एवान्तर्भूत इत्यत आह अन्यतमत्वेति आदिना तच्चतुष्टयविषयकधीविषयताव
च्छेदकधर्मवत्त्वपरिग्रहः सत्प्रतिपक्षव्यवहारोपयोगिनमित्यनेनैतादृशस्थले प्राचां सत्प्रतिपक्षव्यवहारमात्रम् नत्वयं हेतुदोषा
त्मकसत्प्रतिपक्ष इति सूचितं प्रथमोपस्थितेनेत्युपलक्षणं समवलविरोधिपरामर्शद्वयसत्त्व एव तथा व्यवहारादित्यवधेयम्॥ ॥

का० सु० टि० रा० १६०

रा० प्रकृतानुपयोगः हेत्वाभासनिरूपणप्रस्तावे उपयोगाभावः नन्वयमेव सत्प्रतिपक्षाभावाद्धेत्वाभास इति कुतो नोपयोग इत्यत आह उपस्थि

टि० सत्प्रतिपक्षव्यवहारौपयिकमन्येषां सत्प्रतिपक्षलक्षणमाह अगृहीतेति नित्यत्वव्याप्यशब्दत्ववत्ताज्ञानशून्यकालीनानि त्यत्वव्याप्यकृतकत्वपरामर्शसत्वेपि सत्प्रतिपक्षव्यवहाराभावात्कालीनान्तमुपस्थितिविशेषणम् गृहीताप्रामाण्यकनित्यत्वव्याप्यवत्ताज्ञानकालीनानित्यत्वव्याप्यकृतकत्वपरामर्शसत्वेपि तद्व्यवहाराभावादगृहीताप्रामाण्यकेति प्रथमोपस्थितिविशेषणं। तादृशकालीनानित्यत्वव्याप्यवत्तापरामर्शसत्वेपि तत्राप्रामाण्यग्रहकाले तथा व्यवहाराभावादगृहीताप्रामाण्यकत्वं द्वितीयोपस्थिति विशेषणम् व्यवहारमात्रोपयोगिनो निरुक्तरूपस्य प्रकृतानुपयोगः उपस्थितिघटितसोक्तरूपस्य स्वरूपसत एवोपयुक्तस्याभासता

मु० अगृहीताप्रामाण्यकसाध्यव्याप्यवत्ताप्रकारकोपस्थितिकालीनाऽगृहीताप्रामाण्यकतदभावव्याप्यवत्ता प्रकारकोपस्थितिविषयस्तथेत्यन्ये अत्र च परस्पराभावव्याप्यवत्ताज्ञानात्परस्परानुमितिप्रतिबन्धः फलम् अत्र केचित् यथा घटाभावव्याप्यवत्ताज्ञाने विद्यमानेपि घटचक्षुःसंयोगे सति घटवत्ताज्ञानमुत्पद्यते यथा च शङ्खे सत्यपि पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने सति पित्तादिदोषे पीतः शङ्ख इति धीरेवं कोटिद्वयव्याप्य दर्शनेपि कोटिद्वयस्य प्रत्यक्षरूपः संशयो भवति तथा सत्प्रतिपक्षस्थले संशयरूपानुमितिर्भवत्येव ॥

ग्यामप्रयोजकत्वादित्यस्वरसं सूचयन्नन्य इति सत्प्रतिपक्षस्य दूषकताबीजं प्रदर्शयति अत्रेत्यादिना सत्प्रतिपक्षस्य संशय जनकत्वं दूषकताबीजमन्यत्वनुमितिप्रतिबन्धकत्वं तदभावव्याप्यवत्ताज्ञानस्यानुमितिप्रतिबन्धकत्वे मानाभावादिति रत्नकोशकारमतं दूषयितुमुपन्यस्यति अत्र केचिदित्यादिना अनुमितिर्भवत्येवेति अनुमितिमात्रं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वे मानाभावात् क्लृप्तं तत्तदभावानुमिति सामग्रीभ्यामेव तत्तदभावकोटिकसंशयानुमित्युत्पत्तौ संशयानुमितिप्र सुभयव्याप्यवत्तानिश्चयत्वेनातिरिक्तहेतुताकल्पने प्रयुक्तगौरवाभावाच्चेति भावः ॥ श्री १ ॥ १ ॥ श्री १ ॥ ॥ ७ ॥ ७ ॥ १ ॥

राम

तेति। विरोधिपरामर्शद्वयस्य स्वरूपसत एव परामर्शकार्यप्रतिबन्धकत्वमनुज्ञानस्य यादृशरूपावच्छिन्नज्ञानमनुमितिप्रतिबन्धकं तादृ ॥ १ ॥ १

रा०। पावच्छिन्नस्यैव हेत्वाभासतया नैतस्य हेत्वाभासतासम्भव इति भावः सूचयतीति ननु रत्नकोशकारमतेन तद्ज्ञानाज्ञानेन तदभावव्याप्य
वत्ताज्ञानस्याप्रतिबन्धकत्वेन परस्परानुमितिप्रतिबन्धकस्य सत्प्रतिपक्षस्य स्थलेऽसम्भवेपि निश्चयात्मिकाऽनुमित्युत्पत्त्यशक्तिकयोस्तदभा
वव्याप्यवत्ताज्ञानयोर्मिलितयोस्साध्यसंशयहेतुत्वं कल्पनीयमिति गौरवमित्याशङ्कां निराकर्तुमाह क्लृप्तेति अयम्भावः न तत्परामर्श
स्य तत्तद्विधेयकानुमितित्वमेव कार्यतावच्छेदकन्तु निश्चयत्वमपि तद्घटकम् परन्तु एकैकपरामर्शसत्वे कोट्यन्तरभासकसामग्र्यभा

दि०। ननु यद्युभयभासकसत्व उभयभानन्तदापि ताद्दि दोषसत्वेपि पीतत्वशुक्लत्वोभयस्मृतावुभयोर्भानापत्तिरित्यत आह
फलवलेनेति तथाच तत्र पीतत्वसाक्षात्कारस्यैवानुभाविकतया शुक्लत्वग्रहे पि पित्तरूपदोषप्रतिबन्धकत्वङ्कल्प्यमि।

सु०। यत्र चैककोटिव्याप्यदर्शनन्तत्राधिकवलतया द्वितीयकोटिभानप्रतिबन्धान्न संशयः फलवलेन चा
धिकवलसमवलभावः कल्प्यत इत्याह स्तन्नतदभावव्याप्यवत्ताज्ञाने सति तदुपनीतभानविशेष
शाब्दवोधादेरनुदयाल्लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानमात्रेतस्य प्रतिबन्धकता लाघ
वात्तत्तूपनीतभानविशेषे शाब्दवोधे च पृथक्प्रतिबन्धकता गौरवात्॥ ११त्वापीतत्वसाक्षात्कारसाम।

ग्र्याश्चाधिकवलवत्वमेव दूरत्वदोषे सत्यपि स्थाणुत्वपुरुषत्वयोः स्मृतौ संशयस्यैवोदयात्तत्सामग्र्योः समवलवत्वमेव क
ल्प्यत इति भावः ज्ञानमात्रे तादृशज्ञानत्वावच्छिन्ने विशेषे दोषविशेषाजन्ये गौरवात् कार्यकारणभावद्वय कल्पने गौर
वादिति भावः

वात् निश्चयात्मिकाऽनुमितिर्भवति उभयपरामर्शसत्वे च कारणवलादुभयकोट्योर्विरोधितया भानेर्थ्यात्संशयो भवतीति ता
धिककार्यकारणभावकल्पनेतत्तमते इति उभयस्मृतावपि संशये कोटिद्वयस्योपनयसन्निकर्षेणैव भानात् पीतत्वशुक्लत्वरूपकोटिद्वयोपस्थि
तौ पित्तदोषादपि संशय एव स्यात्तत्पीतत्वनिश्चय इति भावः आधिक्यमिति मूले नीलधूमादिहेतुकस्थल एव व्याप्यत्वासिद्धेरभिधानादिति भावः॥

का०मु० दि०रा० ५९

रा० अत्र चाव्यभिचारविशिष्टसाध्यसामानाधिकरण्याभावत द्व्याप्योर्व्याप्यत्वासिद्धौ बोध्यौ वन्यत मत्वेनानुगमः दूषकतावीजम्व्याप्ति
ज्ञानप्रतिबन्धकतावच्छेदकत्वम् न चैवन्दूषकतावीजसत्वे केनव्यभिचारस्य हेत्वाभासान्तरत्वन्नस्यादिति वाच्यम् दूषकतावीजसत्वे।

दि० कथमनुमितिरिति अनुमितेरपि न प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति भावः कथन्तर्ह्युभयव्याप्यवत्ता निश्चया
त्मानसिकः संशय इत्याशङ्कां न भवत्येवतावद्यावन्न निश्चयेऽप्रामाण्यन्नगृह्यत इत्याह यत्र चेति आश्रयासिद्ध्यादीत्या

मु० तथा च प्रतिबन्धकसत्वात्कथमनुमितिः न हि लौकिकसन्निकर्षस्थले प्रत्यक्षमिव सत्प्रतिपक्षस्थले संश
याकारानुमितिः प्रामाणिकी येनानुमितिभिन्नत्वेनापि विशेषणीयम् यत्र च कोटिद्वयव्याप्यवत्ताज्ञानन्त
त्रोभयत्राप्रामाण्यज्ञानात्संशयो नान्यथाऽगृहीताप्रामाण्यकस्यैव विरोधिज्ञानस्य प्रतिबन्धकत्वादिति अ
सिद्धिस्तु आश्रयासिद्ध्याद्यन्यतमत्वम् आश्रयासिद्धिः पक्षे पक्षतावच्छेदकस्याभावः यत्र काञ्चनमयः
पर्वतो वह्निमानिति साध्यते तत्र पर्वतो न काञ्चनमय इति ज्ञाने विद्यमाने काञ्चनमये पर्वते परामर्शप्रतिब
न्धः फलम् स्वरूपासिद्धिस्तु पक्षे व्याप्यत्वाभिमतस्याभावः तत्र च ह्रदो द्रव्यन्धूमादित्यादौ पक्षे व्याप्य।
त्वाभिमतस्य हेतोरभावे ज्ञाने पक्षे व्याप्यहेतुमत्ताज्ञानरूपस्य परामर्शस्य प्रतिबन्धः फलम् साध्याप्रसिद्ध्या
दयस्तु व्याप्यत्वासिद्धिमध्येऽन्तर्भूताः साध्ये साध्यतावच्छेदकस्याभावः साध्याप्रसिद्धिः एतत् ज्ञाने।
जाते काञ्चनमयवह्निमानित्यादौ साध्यतावच्छेदकविशिष्टसाध्यपरामर्शप्रतिबन्धः फलम्॥ श्री।

दिना स्वरूपासिद्धिव्याप्यत्वासिद्ध्योः परिग्रहः साध्याप्रसिद्ध्यादीनामाधिक्यन्निराकरोति साध्याप्रसिद्ध्यादयस्त्विति आदिना
"साधनाप्रसिद्धिपरिग्रहः॥
कोऽपि वाधसत्प्रतिपक्षयोरिव व्यभिचारासिद्ध्योर्मुनिना पृथगुपदेशेन हेत्वाभासान्तरतासम्भवाच्चास्वरसस्य इति सूचितमिति शेषः॥६॥ ॥७॥ ॥६॥७॥

रा०म० ५९

रा०।सत्त्वादिति नीलधूमस्य धूमानतिरिक्तत्तया धूमव्याप्तिविरहादिति भावः अनवच्छेदकत्वं येन्मस्य व्याप्तेरित्यादिः तदवच्छेदेनेति योधर्मो
यस्यानवच्छेदकस्तदवच्छेदेन तदभावः मूलावच्छेदेन वृक्षे कपिसंयोगाभाववदिति भावः अवच्छेदकत्वाभावादिति तन्मूलस्य वृक्षवृ
त्तिकपिसंयोगानतिरिक्तवृत्तित्वेपि स्वरूपसम्बन्धरूपावच्छेदकत्वाभावादेव मूलावच्छेदेन वृक्षे कपिसंयोगाभावोपगमादिति भावः व्याप्य

दि०।केषांचिन्मतमाह।एवंवह्निमानित्यादिना वदन्तीत्यनेनास्वरसस्तद्बीजन्तु नीलधूमे व्याप्तिसत्त्वात्कथं व्याप्यत्वासिद्धिः
न च तत्र व्याप्तिसत्त्वेपि नीलधूमत्वस्यानवच्छेदकतया तदवच्छेदेन व्याप्यत्वासिद्धिरेवेति वाच्यम् अनतिरिक्तवृत्ति
त्वरूपावच्छेदकत्वस्य नीलधूमत्वेपि सत्त्वात् स्वरूपसम्बन्धरूपावच्छेदकत्वाभावाद्व्याप्यत्वासिद्धिरित्यपि न तथा स।

मु०।एवं हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः यथा काञ्चनमय धूमादित्यादौ अत्र हेतुतावच्छे
दकविशिष्टहेतुताज्ञानाभावेन हेतुकव्याप्तिज्ञानादेरभावः फलम् एवं वह्निमान्नीलधूमादित्यादौ गु
रुतया नीलधूमत्वस्य हेतुतानवच्छेदकत्वमपि व्याप्यत्वासिद्धिरित्यपि वदन्ति॥

निपश्यमानसास्नादिमत इत्याद
वपि व्याप्यत्वासिद्ध्यापत्तेः सास्नाद्यपेक्षया गोत्वादिजातेर्लघुत्वेन सास्नादेः स्वरूपसम्बन्धरूपावच्छेद कत्वाभावात्
अस्तु वा नीलधूमत्वादेः स्वरूपसम्बन्धरूपावच्छेदकत्वाभावात्तदवच्छेदेन व्याप्यभावरूपव्याप्यत्वासिद्धिर्न तु हेत्वा।
भासत्वमनुमिति तत्करणीभूतव्याप्तिज्ञानाविरोधित्वात्॥ ११ त्वासिद्ध्यापत्तेरिति स्वरूपसम्बंधरूपावच्छेदकत्वं यस्य नास्ति तदवच्छे
देन व्याप्यत्वाभावोपगमो व्यर्थविशेषणत्वाभावेपि गुरुधर्मेण हेतुतायां सर्वत्र व्याप्यत्वासिद्धिप्रसंगादिति भावः ननु गुरुधर्मेण हेतुतायां स
र्वत्र व्याप्यत्वासिद्धिरिष्टैवेत्यत आह अस्तुवेति अविरोधित्वादिति हेतुतावच्छेदकांशे व्याप्त्यवच्छेदकतावगाहिनोपि व्याप्तिप्रकारकपक्षधर्म
ताज्ञानस्यानुमिति हेतुत्वोपगमात्तत एव व्याप्यंशे निर्धर्मितावच्छेदकादपि वह्निव्याप्यवानिति शाब्दपरामर्शादप्यनुमितिरङ्गीक्रियत इति भावः

रा॰। मीमांसकमतानुयायी शङ्कते नन्वेति तथा चोक्तपरामर्शस्थलेपि वह्निव्याप्यो वह्निव्याप्य इति ज्ञानान्तरवतोऽनुमितिर्नान्यथेति भावः ६॥ तावतापि उक्तस्थलेऽनुमिति वारणानुरोधेनापि उपसंहरति तस्मादिति गुरुधर्मस्य हेतुतावच्छेदकत्वस्थले सर्वत्र प्राचीनैर्व्याप्यत्वासिद्धिर्नोद्भाव्यते अपि तु समानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटितस्य तथात्वस्थल एवेत्यभिप्रायेणाह व्यर्थविशेषणस्थल इति अपि

दि॰। नच वह्निमद्वृत्तिप्रमेयवानिति प्रमेयत्वसामानाधिकरण्येन व्याप्त्यवगाहि ज्ञानादनुमित्यापत्तिवारणाय हेतुताव। च्छेदकावच्छेदेन व्याप्तिज्ञानस्यैव कारणतया न हि विरोधितया निरुक्तव्याप्यत्वासिद्धिर्हेत्वाभास इति वाच्यम् तावतापि अनतिरिक्त वृत्तित्वरूपावच्छेदकत्वग्राह्यज्ञानस्य कारणत्वेपि तत्र स्वरूपसम्बन्धरूपावच्छेदकत्वाभावग्रहस्य ग्राह्याभावानव। गाहितयाऽविरोधित्वात्तस्माद्व्यर्थविशेषणस्थले न व्याप्यत्वासिद्धिर्हेत्वाभासः पुरुषस्त्वधिकेन निगृह्यत इति साध्याभाव

मु॰। बाधस्तु पक्षे साध्याभावादिः एतस्य त्वनुमितिप्रतिबन्धः फलम् तद्धर्मिकतदभावनिश्चयो लौकिकसन्निकर्षाजन्यदोषविशेषाजन्य तद्धर्मिकतज्ज्ञानमात्रे विरोधीति ॥ श्री ६॥ ६॥ ६॥

दि॰। इत्यादिना साध्यवदन्यत्वस्य पक्षादिवृत्तिसाध्यादेश्च परिग्रहः तद्धर्मिकतदभावनिश्चयः अनाहार्याप्रामाण्यज्ञानाना स्कन्दिततद्धर्मिकतदभावनिश्चयः बाधबुद्ध्युत्तरक्षणे लौकिकसन्निकर्षजन्यविशिष्टबुद्धेरानुभविकत्वादाह लौकिकेति सन्निकर्षाजन्येति नन्वेवं तदिन्द्रियजन्य लौकिकबाधनिश्चयोत्तरं तदिन्द्रियजन्य लौकिकतद्विशिष्टबुद्ध्यापत्तिरिति चे

केनेति अधिकोक्तेर्निग्रहस्थानत्वेन धूमादित्युक्ते वस्तासंजस्ये नीलपदप्रयोगस्याधिकत्वादिति भावः साध्यादेश्चेत्यादिना साध्याभाववत्पक्षस्य साध्यवदन्यपक्षयोः परिग्रहः प्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यनिवेशस्य फलमाह बाधबुद्ध्युत्तरेति एवम् प्रतिबध्यतावच्छे दककोटौ लौकिकत्वनिवेशेन तद्विशिष्टबुद्ध्यापत्तिरिति समाने ॥ श्री ६॥ ६॥ श्री ६॥ ६॥ ॥श्री ६ ॥६॥ श्री ६॥ ॥६॥ ६॥ ६॥ ६॥

२०।न्द्रियजन्यबाधबुद्धेस्तु तस्यालौकिकसन्निकर्षेणापि तद्धर्मिविशिष्टबुद्धेरनुपगमान्नातिप्रसक्तिरपि सम्भवतीति भावः॥ ॥ अलौकिकत्वं लौकिकसन्निकर्षाजन्यत्वं ननु लौकिकाभावप्रमायां सत्यां प्रतियोगिनि लौकिकसन्निकर्षासम्भवादेव न लौकिकतद्वत्ताबुद्ध्यापत्तिरि

टि०। अलौकिकत्वस्य प्रतिबध्यतावच्छेदककोटावनिवेशे तदिन्द्रियजन्यतद्धर्मिविशिष्टबुद्धौ तदिन्द्रियजन्यलौकिकतद।भावनिश्चयत्वेन प्रतिबन्धकत्वोपगमात् तदिन्द्रियजन्योपनीतभानात्मकबाधनिश्चयोत्तरं तदिन्द्रियजन्यलौकि।कतद्धर्मिविशिष्टबुद्ध्युदयात् प्रतिबन्धकतावच्छेदककोटौ लौकिकत्वस्य निवेशः न च लौकिकतदिन्द्रियजन्याभावप्रमास्थले तदधिकरणे प्रतियोगिनोऽसत्त्वादेव न तद्धर्मिविशिष्टलौकिकप्रत्यक्षापत्तिरित्यलं तथाविधप्रतिबध्यप्रतिबन्धकभावेनेति वाच्यम् यत्र प्रतियोग्यधिकरण एव सन्निकृष्टाधिकरणान्तरदृष्टेनाभावस्य लौकिकप्रत्यक्षात्मकारोपो दोषेणाजनितस्तदुत्तरं तदधिकरणे प्रतियोगिनो लौकिकप्रत्यक्षापादनात् तत्राभावलौकिकप्रत्यक्षजनकदोषस्य प्रतिबन्धकत्वादेव नेयमापत्तिरन्यथाऽभावारोपोत्पत्तिक्षणे प्रतियोगिप्रत्यक्षापत्तिरिति तु न यत्र विनश्यदवस्थदोषेणाभावलौकिकप्रत्यक्षात्मकारोपस्तदुत्तरं प्रतियोगिप्रत्यक्षापादनात् यत्राभावलौकिकप्रमासमकालं तद्वितीयक्षणे वा तदधिकरणे प्रतियोगिप्रकारकानुभूयमानारोपजनकदोषसमवधानं तत्राभावप्रमोत्तरं प्रतियोगिनो लौकिकप्रत्यक्षात्मकारोपापादनवारणाय वा इन्द्रियभेदेन तथाविधप्रतिबध्यप्रतिबन्धकभावोपगमात् शङ्खो न पीतः वंशो नोरग इति निश्चयेऽपि पित्तमण्डूकवसाञ्जनादिदोषवशाच्छङ्खः पीतः वंश उरग इत्यारोपोदयात् तत्र।व्यभिचारवारणायाह दोषविशेषेति दोषसामान्याजन्यत्वनिवेशे भ्रममात्रस्यैव बाधाप्रतिबध्यत्वापत्तिरतो विशेषेति तथा च पित्तमण्डूकवसाञ्जनादिदोषान्यविशिष्योपादाय तदजन्यत्वं प्रतिबध्यतावच्छेदककोटौ निवेशनीयमिति भावः॥

ति किं समानेन्द्रियस्थले प्रतिबध्यप्रतिबन्धकभावान्तरेणेति शङ्कते न चेति प्रतियोगिप्रत्यक्षापादनात् तत्प्रत्यक्षापादनसम्भवात्॥ श्री६॥

का०गु०
दि०श०
१६३

राण्लौकिकाभावभ्रमस्थले प्रयोजनमुपपाद्य प्रमास्थले तदाह यत्राभावेति समवधानमिति इदन्त्वप्रमातः पूर्वमेव तदाह शङ्खे दोषसमवधा
नेयाधमप्रमैव न सम्भवति प्रतियोगिभ्रमजनकदोषेण प्रतिबन्धादित्यभिप्रायेणोक्तमिति बोध्यम् दोषविशेषाजन्यत्वनिवेशस्य प्रयो

दिंनचपित्तद्रव्यात्मकदोषाजन्यत्वनिवेशो व्यर्थः शङ्खः पीत इति तु मे शङ्खांशेऽनुभूयमानस्यैव पित्तद्रव्यपीति
म्न आरोपोपगमेन तदंशेऽपि लौकिकत्वाद् लौकिकत्वस्य प्रतिबध्यतावच्छेदके निवेशादेव तत्र व्यभिचारवारणादिति वा।
च्यम् पित्तद्रव्यस्यात्र रागनवस्थानदशायामपि तत्पीति म्नः शङ्खादौ प्रत्यक्षोदयेन स्मर्यमाणारोपस्यैव तत्र नवीनैः स्वीका
रात्तदंशे तस्यालौकिकत्वात् तथा सति शङ्खः पीत इति प्रत्यक्षोत्तरम्पीतं साक्षात्करोमीति साक्षात्कारित्वग्रहानुपप
त्तिस्तद्धाज्ञकलौकिकविषयतायास्तत्राभावादिति तु न लौकिकविषयताया इव दोषजन्यत्वस्यापि साक्षात्कारित्वव्यञ्जक।
त्वादन्यथायमुरग इति स्मर्यमाणारोपे साक्षात्कारित्वग्रहानुपपत्तेः शङ्खो न पीत इत्यादि तदिन्द्रियजन्यबाधबुद्ध्यु
त्तरम्पित्तादिदोषवशात्तदिन्द्रियजन्यः शङ्खः पीत इत्यारोपो यदानुभवसिद्धस्तदा पूर्वोक्तेन्द्रियभेदभिन्नप्रतिबध्यप्र।
तिबन्धकभावेऽपि दोषविशेषाजन्यत्वम्प्रतिबध्यतावच्छेदके निवेशनीयमिति ध्येयम् ननु बाधप्रतिबध्यतावच्छेद
ककोटौ लौकिकान्यत्वस्य निवेशे बाधनिश्चयोत्तरं लौकिकसन्निकर्षजन्यसंशयापत्तिरिति चेन्न भूतलं घटवदित्या
द्याकारकलौकिकप्रत्यक्षोत्पत्तिकाले —— स्यात्तत्क्रमेण कथञ्चिदुपस्थितस्य घटाभावादेर्भूतले प्रकारतया भानवारणाय
समानधर्मितावच्छेदकतत्कोटिकलौकिकप्रत्यक्षसामग्र्या विपरीतकोटिभानप्रतिबन्धकत्वमवश्यमङ्गीकरणी
यम् तथा च बाधनिश्चयोत्तरमपि नापत्तिर्लौकिकसन्निकर्षजन्यसंशयस्य तत्कोटिकलौकिकप्रत्यक्षसामग्र्याः
प्रतिबन्धिकायाः सत्वेन विपरीतकोटिभानासम्भवात् तर्हि क्वापि लौकिकसन्निकर्षजन्यसंशयो न स्यादिति चेदोम्॥ तम·

जनमाह शङ्खो न पीत इत्यादि॥ भ्रममात्रस्यैवेति दोषं विना भ्रमानुत्पत्तेरिति भावः॥ मण्डूकेति भेकवसाञ्जनरू॥ श्री ६॥ श्रीग६छ॥ १६३

रा०पदोषाद्दूरे उरगस्य प्रत्यक्षभ्रमोत्पादादितिभावः आदिनाइन्द्रजालमंत्रादिदोषाणां सङ्ग्रहः तद्व्यञ्जकेति साक्षात्कारत्वजातिव्यञ्जकेत्यर्थः
यद्यनुभवसिद्ध इत्यनेनवस्तुतस्तादृशानुभवएवनास्तिकिमर्थंसमानेन्द्रियस्थलीयप्रतिबध्यतावच्छेदकेतन्निवेशनीयमितिसूचितम् सं
शयापत्तिरितीति संशयनिश्चयसाधारणतद्वत्ताबुद्धित्वस्यैवप्रतिबध्यतावच्छेदकत्वेनसंशयपृथक्प्रतिबन्धकतायाअभावादितिभावः॥

दि०॥ज्ञानप्रत्यासत्त्यैवपूर्वोपस्थितकोट्योर्भानसम्भवादिति यत्तुसंशयपूर्वेतत्कोट्यंशेलौकिकसन्निकर्षसत्त्वेकथंसंश
यस्यनलौकिकत्वंकथंवानत्रसंशयेविपरीतकोटिभानेतत्कोटिकलौकिकप्रत्यक्षसामग्र्याःप्रतिबन्धिकायाःसत्त्वादि
तितन्न तत्रलौकिकसन्निकर्षसत्त्वेपिसंशयजनकदूरत्वादिदोषस्यलौकिकप्रत्यक्षसामग्र्याःप्रतिबन्धकस्यसत्त्वे
नलौकिकप्रत्यक्षसामग्र्यभावादुभयोपपत्तेरित्यन्यत्रविस्तरःकस्यचिन्मतन्दूषयति नन्वितिइतियुक्तमित्यनेनान्वयि

मु०॥ननुसंशयसाधारणंपक्षेसाध्यसंसृष्टत्वज्ञानमनुमितिकारणम् तद्विरोधितयाचवाधसत्प्रतिप
क्षयोर्हेत्वाभासत्वमितियुक्तम् अप्रसिद्धसाध्यकानुमित्यनापत्तेःसाध्यसंशयादिकंविनाप्यनुमित्युत्पत्तेश्च

नन्वेवम्बाधनिश्चयकालेसंसृष्टत्वज्ञानाभावादेवानुमित्यभावोपपत्तौबाधनिश्चयस्यनानुमितिविरोधित्वमितिहेत्वा॥
भासत्वन्नस्यादतआह तद्विरोधितयेति अनुमितिकारणीभूतस्यसाध्यसंसृष्टत्वज्ञानविरोधितयेत्यर्थः नन्वप्रसिद्धसा
धकानुमितिः कुत्रापिनभवत्येवेत्यतआह साध्यसंशयेति॥ श्री६॥ ॥६श्री६॥ ॥६॥ श्री६॥ ॥७॥॥

लौकिकसन्निकर्षजन्यसंशयएवनसम्भवतीति एककोटिलौकिकप्रत्यक्षसामग्रीविरोधिकोटिभानप्रतिबन्धकत्वादन्यथाभूतलेघ
टवदितिनिश्चयकालेपिसंशयापत्तेरितिकथंबाधनिश्चयोत्तरंलौकिकसन्निकर्षजन्यसंशयोपपत्तिरितिभावःसमाधत्ते भूतलमित्या
दि तद्धीति एककोटिलौकिकप्रत्यक्षसामग्र्याविपरीतकोटिभानप्रतिबन्धकत्वमित्यर्थः क्वापिबाधनिश्च०॥ श्री॥६ ॥६॥ ६॥

रा०अयातुत्तरमपि उक्तशङ्कायामिष्टापत्तिमाह संशयो न स्यादिति दूरस्थस्थाणवादि संशयो न स्यादित्यर्थः॥६॥ न लौकिकत्वन्न लौकिकसन्निक
र्षजन्यत्वं लौकिकसन्निकर्षसत्त्वे कोटिभाने बाधकाभावादिति भावः उभयोपपत्तेरिति संशये लौकिकसन्निकर्षजन्यत्वस्य विपरीत
कोटिभानस्य चोपपत्तेरित्यर्थः लौकिकसन्निकर्षसत्त्वेपि तस्य दूरत्वदोषेण कोटयभानकत्वादिति भावः अन्यत्र विस्तर इत्यनेन संशय
जनकदोषसामान्याभावेनु सन्निकृष्टकोटेर्निश्चय एवेति सूचितम् कस्यचिन्मतमिति ननु संशयपक्षतावादिन इति भावः शुन्यात्मनिश्च
यवतोपि सिषाधयिषयाऽनुमित्युपपत्तये निश्चयसाधारणसाध्यसंसर्गज्ञानत्वेनैवैतन्मते कारणतायाः प्रतिपादकत्वादिति विभावनीयम्

टि० ननु संशयशून्यकालेपि सिषाधयिषाकालीनसाध्यनिश्चयात्मकसाध्यसंसृष्टत्वज्ञानमस्त्येवेत्यत आह आदीति आदिना।
सिषाधयिषाकालीनसिद्धिपरिग्रहः नच संशयानन्तरोत्पन्नैवानुमितिसिद्धिरिति वाच्यम् सति विशेषदर्शने संशयायोगात्

मु० एवं साध्याभावज्ञाने प्रमात्वज्ञानमपि न प्रतिबन्धकं मानाभावाद्गौरवाच्च॥ श्री६॥ ६॥

पक्षविशेष्यकसाध्याभावज्ञाने प्रमात्वनिश्चयोऽनुमितिप्रतिबन्धकस्तदभावः कारणमतस्तादृशप्रमात्वमेव बाध इति प्रा
चीनमतन्दूषयति एवमिति प्रमात्वज्ञानमपि प्रमात्वनिश्चयोपि मानाभावादिति ग्राह्याभावानवगाहित्वस्तादृशज्ञानस्य
विरोधित्वे मानाभावादित्यर्थः॥

मूले अप्रसिद्धेति पूर्वगृहीतसाध्यविधेयकेत्यर्थः तथाच पृथिवीतरत्वव्याप्याभावप्रतियोगिगन्ध
वती पृथिवीति व्यतिरेकिपरामर्शजन्यसाध्यविशेषणिकायाः पृथिव्यामितरभेद इत्यनुमितेरभावापत्तेरित्यर्थः उत्तरदूषणमवतारय
ति नन्वप्रसिद्धेति नभवत्येवेति आचार्यमते सर्वत्रान्वयव्याप्तिज्ञानस्यैवानुमितिहेतुव्यतिरेकसहचारेणापि अन्वयव्याप्तिरेव गृह्यते।
इति तैरङ्गीकारादुभयपरामर्शादनुमितेरसिद्धत्वादन्वयव्याप्तेस्साध्यघटितमूर्तिकत्वेन व्याप्तिज्ञानसमय एव साध्यज्ञानावश्यकत्वादिति
भावः॥ ७॥ सिद्धिपरिग्रह इति सिद्धिस्साध्यनिश्चयः सिद्धिसत्त्वेसि॥ ६॥ श्री६॥ श्री६॥ ॥ श्री६॥ ॥६॥ ॥६॥ ६॥ ६॥ ६॥

रा०षा धयिषां विनानाऽनुमितिरतः कालीनात्तम् तथाच घनगर्जितेन मेघानुमितिस्थले संशयनिश्चययोर्द्वयोरप्यभावेन साध्यवत्ताज्ञान त्वानुमितिहेतुरिभावः घनगर्जितेन मेघानुमितिस्थलेपि संशयं कल्पयित्वा क्षणविलम्बेनैवानुमितिरुपेयते अतो नानुपपत्तिरित्याशङ्कते नचेति संशयोत्पत्त्यावेति पाठः सतीति गर्जितश्रवणानन्तरमेव मेघव्याप्यगर्जितवत्तापरामर्शोत्पत्त्यानेन मेघाभावकोटिकसंशयप्रतिबन्धा दित्यर्थः नच विशेषदर्शनेन प्रतिबन्धाद्भावकोटिभानासम्भवात्मनसा निश्चय एवास्त्विति वाच्यम् तथा सति सिद्धेः प्रतिबन्धकत्वेना नुमित्यनुपपत्तेः कल्प्यतइति चेत् परामर्शस्यैव नाशापत्त्याऽनुमित्यनिर्वाहादिति भावः अत्राप्यनन्तरपदप्रमादिकमेवोक्तस्थले पूर्व

दि० ननु पक्षे साध्याभावज्ञानेपि तत्राप्रामाण्यज्ञानकालेऽनुमितेरुदयात्तत्साध्याभावज्ञानं प्रतिबन्धकम् अस्मन्मते तु तदा साध्याभावज्ञाने प्रमात्वनिश्चयाभावादेवात्रानुमित्युत्पत्तिरत आह गौरवादिति तथाच तत्रानुमितिनिर्वाहा य संशयनिश्चयसाधारणाप्रामाण्यज्ञानाभाव एव प्रतिबन्धकतावच्छेदककोटौ निवेश्यते ननु पक्षविशेष्यकसा ध्याभावज्ञानप्रमात्वनिश्चयत्वेन प्रतिबन्धकत्वङ्गौरवादित्यर्थः यत्र पक्षे साध्याभावज्ञानमस्ति न तु तत्र प्रामाण्य ज्ञानन्तत्वाः प्रामाण्यज्ञानन्तत्राप्यनुमितिर्नभवत्येवेति भावः साध्याभाववत्पक्षघटितप्रमात्वविषयकत्वेऽनुमितिप्र तिबन्धकतानतिरिक्तवृत्तित्वसत्वात्तत्साभासत्वन्तु वीरमितितुन प्रमेयत्वविशिष्टव्यभिचारादेरिव तादृशविशिष्टा न्तरघटितत्वेनाभासत्वायोगादिति॥

ऽऽ संशयाभावादिति ध्येयम् यदि चैतत्पाठे प्रामाण्येप्याग्रहः तदा संशयं विनेत्यादि मू लस्य व्याप्तिस्मरणादिना परामर्शोत्पत्तिक्षणे पूर्वसंशयस्य नाशादित्यभिप्रायवत्तापरिकल्प्य घनगर्जितस्थलेपि संशयोत्पत्त्यनन्तरमेवानुमि तिरित्यभिप्रायञ्च कल्पयित्वैव संशयो योजनीयः न च साध्याभावज्ञानस्य ज्ञानत्वेन निवेशे संशयधर्मिकप्रमात्वनिश्चयदशायामपि अनुमिति प्रतिबन्धापत्तिरिति वाच्यम् इष्टापत्तेः साध्याभावांशे निश्चितप्रामाण्यकस्य संशयस्यापि साध्याभावनिश्चयसमशीलत्वादन्यथोभयत्रापि निश्चयनि

रा०।नैतन्मते गौरवापत्तिरिति भावः ग्राह्याभावानवगाहिन इति। यद्धर्मावच्छिन्नग्राह्यसाध्याभावानवगाहिन इत्यर्थः।तेन साध्याभाववति साध्याभावप्रकारकमित्यप्रामाण्यनिश्चयस्य साध्याभावावगाहित्वेपि नानुपपत्तिः नसाध्याभाव इति नसाध्याभावनिश्चय इत्यर्थः प्रतिवादिना साध्याभावनिश्चयस्यैव प्रतिबन्धकत्वोपगमादित्यवधेयम्॥ ॐ॥ गौरवादिति पक्षविशेष्यकत्वापेक्षया पक्षविशेष्यकसाध्याभाव ज्ञानविशेष्यत्वस्य साध्याभावनिश्चयत्वापेक्षया साध्याभाववति साध्याभावप्रकारकत्वनिश्चयत्वस्य चातिगुरुत्वादित्यर्थः नन्वप्रामाण्यज्ञाना—नास्कन्दितपदद्वयावच्छिन्नविषयकनिश्चयत्वमनुमिति प्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नत्वमेव हि हेत्वाभासल

दि०।नन्वगृहीताप्रामाण्यकसाध्याभावनिश्चयस्य प्रतिबन्धकत्वे प्रथमोपस्थितप्रमात्वनिश्चय एव न तथा स्यादत आह अन्यथेति सत्प्रतिपक्षादाविन्यादिनाः सिद्ध्यादिपरिग्रहः प्रतिबन्धकत्वापत्तेरित्यस्यानुमित्यादाविन्यादिः नन्वसा

मु०।अन्यथा सत्प्रतिपक्षादावपि तदभावव्याप्यज्ञाने प्रमात्वविषयकत्वेन प्रतिबन्धकतापत्तेः किन्तु भ्रमत्वज्ञानानास्कन्दितबाधबुद्धेः प्रतिबन्धकता॥ श्रीः॥ श्रीः॥ ॥ॐ॥ ॐ ॥॥

ध्याभावप्रमात्वज्ञानेऽनुमितिप्रतिबन्धस्तदभावे नेतु नेत्यन्वयव्यतिरेकाभ्यां प्रमात्वज्ञानस्यानुमितिप्रतिबंधकत्वमत
आह किन्त्विति
रणम् तच्च साध्यवतिप्रकृतपक्षसाध्यवत्प्रकारकत्वरूपाप्रामाण्यसाधारणमेव अधिकन्तु प्रविष्टमित्यादिन्यायादिति ताहशाप्रामाण्यस्य हेत्वाभासतानत्मतेति दुर्वारेत्याशङ्कान्निराकरोति साध्याभाववत्यक्षेत्यादि आभासत्वायोगादित्यत्र पूर्ववाक्यस्थनत्रस्येत्यनुषज्यते॥ ॐ॥ प्रथमोपस्थितेति उक्तप्रतिबन्धकतावच्छेदकधर्मस्य प्रमात्वाभावघटितत्वेन प्रतियोगिज्ञानविधया प्रमात्मकज्ञानस्य प्रतिबन्धकतावच्छेदकधर्मज्ञानात्पूर्वमपेक्षितत्वेन प्रथमोपस्थितत्वलाघवादेव साध्याभावप्रमात्वस्य हेत्वाभासत्वमुचितमिति भावः ॥ श्रीः ॥ ॐ॥

रा० असिद्ध्यादीति यद्यपिव्यभिचारीत्येववक्तुमुचितन्तथापिसत्प्रतिपक्षस्येति विरोधस्यापिसाक्षादनुमितिप्रतिवन्धकत्वम् व्यभिचारादी
नान्तु अनुमित्याद्यविन्यादिपदग्राह्यपरामर्शएवेति तथाभिधानमिति ध्येयम् साक्षादित्यनेनप्रतिवन्धकत्वोपयोगिज्ञानव्यावृत्तिः तस्ये

दि० क्वचिदुपयुज्यतइति तथाचानुमितितत्कारणज्ञानान्यतरप्रतिसाक्षात्प्रतिवन्धकीभूतज्ञानविषयत्वाभावान्नसाध्या
भावज्ञानप्रमोत्वे हेत्वाभासइतिभावः व्यभिचारज्ञानादेरित्यादिनाऽसिद्धिज्ञानपरिग्रहः भेदादिति तथाचवाधस्थलेऽसिद्धिव्य
भिचारान्यतरनियमेपिवाधज्ञानस्यव्यभिचारादिविषयकत्वाभावेनतस्यहेत्वाभासान्तरत्वमितिभावः नचहेतुमान्पक्षः सा

सु० तत्रभ्रमत्वशंकाविघटनेनप्रामाण्यज्ञानङ्क्वचिदुपयुज्यते नचवाधस्थलेपक्षेहेतुसत्वेव्यभिचारः
पक्षेहेत्वभावेस्वरूपासिद्धिरेवदोषइतिवाच्यम् वाधज्ञानस्यव्यभिचारज्ञानादेर्भेदात्॥ श्री १॥ १॥

ध्याभाववानित्याकारकएववाधग्रहः कुतोनभवति सामग्रीसत्वात् तथाचव्यभिचारज्ञानात्मिकैववाधवुद्धिरितिवाच्य
म् परामर्शात्मकाव्यभिचारज्ञानरूपप्रतिवन्धकसत्वेनवाधवुद्धेर्व्यभिचारविषयकत्वासम्भवात् एकत्रहेतौव्यभिचा
राव्यभिचारविषयकैकनिश्चयासम्भवाच्च॥ छ॥ १॥ छ॥

ऽतिवाधस्येत्यर्थः व्यभिचारविषयकत्वासम्भवादिति नतुप
रामर्शोत्तरम्वाधवुद्ध्येर्व्यभिचारविषयकत्वासम्भवेपिपरामर्शएववाधग्रहात्मकोस्तुतथाचसाध्यव्याप्यहेतुमान्पक्षः साध्याभाववानितिव्य
भिचारविषयकवाधवुद्धिसम्भवइत्याशङ्कायामाह एकत्रेति प्रतिवन्धकत्ताभावस्यकार्यकालवृत्तित्वेनकारणत्वादितिभावः इदमु
पलक्षणम् एकत्रपक्षेसाध्यव्याप्यसाध्याभावविषयकज्ञानासम्भवाच्चेत्यपिद्रष्टव्यम्॥ श्री १॥ ॥१॥ छ॥ छ॥ छ॥१॥ १॥

का० अनु० दि० रा० १६६

ग०। बाधलौकिकेति विरोधिज्ञानप्रतिबध्यतावच्छेदककोटौ लौकिकसन्निकर्षाजन्यत्वनिवेशेनायोगोलकधर्मिकपरामर्शोत्तरमपित
द्धर्मिकबाधबुद्धेरपि तदुत्तरमपि वह्निधर्मिकधूमाभाववदयोगोलकवृत्तित्वरूपव्यभिचारविषयकलौकिकप्रत्यक्षसम्भविष्यतीत्यर्थः
तथा च बाधबुद्धेर्व्यभिचारविषयकत्वमुपपद्यत एवेति भावः तत्रेति अनुमित्यादावित्यर्थः ननु स्वरूपासिद्ध्यभावेपि व्यभिचारोस्त्ये
वोत्पत्तिक्षणावच्छेदेन गन्धाभाववति घटे पृथिवीत्वस्य सत्त्वादित्यत आह प्रतियोगिव्यधिकरणेति व्यभिचारघटकसाध्याभावप्रतियो

दि०। नन्वयोगोलकपक्षकधूमसाध्यकवह्निहेतुके बाधलौकिकप्रत्यक्षवद्व्यभिचारलौकिकप्रत्यक्षमपि व्याप्तिनिश्च
येसत्यपि भविष्यतीत्यत आह किञ्चेति अकिञ्चित्करत्वादिति व्यभिचारज्ञानं ह्यनुमितेर्न साक्षात्प्रतिबन्धकं किन्तुप

मु०। किञ्च यत्र परामर्शानन्तरं बाधबुद्धिस्तत्र व्यभिचारज्ञानादेरकिञ्चित्करत्वाद्बाधस्यानुमितिप्रति।
बन्धकत्वं वाच्यम् एवं यत्रोत्पत्तिक्षणावच्छिन्ने घटादौ गन्धव्याप्यपृथिवीत्ववत्ताज्ञानं तत्र बाधस्यैव
प्रतिबन्धकत्वं वाच्यम् न च पक्षे घटे गन्धसत्त्वात्कथं बाध इति वाच्यम् पक्षतावच्छेदकदेशकालाव।
च्छेदेनानुमितेरनुभवसिद्धत्वादिति ॥०॥

९ रामर्शप्रतिबन्धद्वारा तथा च परामर्शोत्तरकालीनव्यभिचारज्ञानम
किञ्चित्करमिति तत्र बाधबुद्धिरेव प्रतिबन्धिकेति भावः व्यभिचारादिसङ्कीर्णमपि बाधम्प्रदर्शयति एवमित्यादिना बाधस्यैवे
ति तत्र पक्षे हेतुसत्त्वेन स्वरूपासिद्धेः प्रतियोगिव्यधिकरणसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारस्य चाभावादिति भावः ॥६॥

गिवैयधिकरण्यस्याप्रवेशे कपिसंयोग्येतद्वृक्षत्वादित्यादिसद्धेतोरपि व्यभिचारित्वापत्तिरिति भावः अयोक्तसद्धेतोर्व्यभिचारित्वापत्तिवार।
णाय प्रतियोगिव्यधिकरणसाध्याभाववत्त्वस्यादिरेव बाधत्वेनाङ्गीकरणीयः एवमुक्तहेतोस्सत्प्रतिपक्षितत्ववारणाय प्रतियोगिव्यधिक
रणसाध्याभावव्याप्यवत्त्वस्यैव सत्प्रतिपक्षत्वमभ्यङ्गीकरणीयम् ॥ श्रीः ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

राम० १६६

रा०यत्तु साध्यस्य प्रतियोगिवैयधिकरण्यघटितसाध्याभावव्याप्तिमत्ताविरोधाभावेन सत्प्रतिपक्षग्रहस्य साध्यग्रहविरोधित्वासत्त्वात्प्रति
योगिवैयधिकरण्यघटितव्याप्तिघटित एव सत्प्रतिपक्षोऽङ्गीक्रियत इति नोक्तसद्धेतोः साध्याभावव्याप्यवत्पक्षसत्त्वमितितन्न तथा सति प्रति
योगिवैयधिकरण्यघटिततदभावव्याप्यवत्ताज्ञानस्यैव सर्वत्र तद्वत्ताबुद्धिप्रतिबन्धकत्वमित्याशयात् तथा च पूर्वग्रन्थकारोक्तस्यानुमिति
कारणपरामर्शस्य साध्यसंशयप्रतिबन्धकत्वस्यानुपपत्तेः अनुमितिकारणपरामर्शे प्रतियोगिवैयधिकरण्यघटितव्याप्तेरेव विषयकत्वात् न
स्मात्प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितस्यापि साध्याभावव्याप्यस्य साध्यविरोधित्वसम्भवेन तस्यैव सत्प्रतिपक्षत्वमुचितम् एव।

दि०बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्तीति पाठः बाधः साध्याभावविशिष्टपक्षादिस्तद्व्याप्य
सत्प्रतिपक्षस्तद्भिन्ना व्यभिचारविरुद्धासिद्धास्तद्व्याप्यानां तत्रैवान्तर्भाव इत्यर्थः अन्यथेति व्यभिचारादेरिव व्यभिचारादित्याप्य।

मु०बाधतद्व्याप्यभिन्ना ये हेत्वाभासास्तद्व्याप्या अपि तन्मध्य एवान्तर्भवन्ति अन्यथा हेत्वाभासाधिक्यप्रस
ङ्गात् बाधव्याप्यसत्प्रतिपक्षो भिन्न एव स्वतन्त्रेच्छेन मुनिना पृथगुपदेशात् सत्प्रतिपक्षव्याप्यस्तु न प्रतिब
न्धक इति प्रघट्टकार्थः॥७२॥ ऽऽस्यापि व्याप्तिग्रहप्रतिबन्धकज्ञानविषयत्वेन पञ्चहेत्वाभासान्तर्गतत्वेन तद
तिरिक्तहेत्वाभासत्वं स्यादित्यर्थः न प्रतिबन्धक इति साध्याभावव्याप्यवत्ताज्ञानस्य साध्यवत्ताज्ञानविरोधित्वे मानाभावादि
ऽऽतिभावः॥

त्वोत्पत्तिक्षणावच्छिन्नघटे यत्र गन्धसाध्यते न तत्र बाधसंभव इति गन्धाभावस्य घटे प्रतियोगिसमानाधिकरणत्वादिति मैवम् यत्र देश
कालयोः स्वरूपसम्बन्धरूपपक्षतावच्छेदकत्वं तत्र तदवच्छेदेन साध्याभाववत्त्वस्यापि बाधत्वाङ्गीकारादिति ध्येयम् अत्र न सत्प्रतिपक्षोऽपि प्र
तियोगिव्यधिकरणगन्धाभावव्याप्यस्य घटेऽसम्भवात् तस्य वा सङ्कीर्णबाधोदाहरणमिदम् अन्यथा सत्प्रतिपक्षसंकीर्णत्वेन बाधस्य हेत्वाभा
सान्तरतात्रापि न स्यात् अन्यथा सत्प्रतिपक्षस्य बाधव्याप्यत्वेनानुपपन्नम्यायकस्याधिकदे॥ ६ श्री ६॥ श्री ६॥ ॥७॥ ६॥८॥

का॰ मु॰ दि॰ १६७

रा॰ गन्धवृत्तित्वे सतिविरहात् नचगन्धाभावस्यकेवलस्यसंयोगाभाववत्केवलान्वयितया प्रतियोगिवैयधिकरण्यघटितव्याप्तिघटितगन्धाभाववत्त्वाप्यवत्त्वस्यात्रापिसम्भवेनैवास्यापिसत्प्रतिपक्षसंकीर्णत्वेनैवनिवाच्यम् एतादृशस्यसत्प्रतिपक्षत्वाङ्गीकारे घटोगन्धवान् पृथिवीत्वादित्यादिसद्धेतोरपिदुष्टत्वापत्तिरित्यलम्पल्लवितेन॥ ६॥ ॥इतिपाठ इति क्वचित्पुस्तकेनतत्पदरहितस्यपाठस्यदर्शनादेतद॰

दि॰ दूषकताबीजस्यभिन्नतयेति साधारणस्याव्यभिचारज्ञानेविरुद्धस्यसामानाधिकरण्यग्रहेप्रतिबन्धकत्वादितिभावः असाधारण्यघटकसपक्षत्वनिश्चयगर्भत्वन्तुसाध्यवत्त्वमात्रमित्याह सपक्षइति एवमग्रेपिसपक्षत्वविपक्षत्वयो

मु॰। यः सपक्षेविपक्षेचभवेत्साधारणस्तुसः सपक्षविपक्षवृत्तिः साधारणइत्यर्थः सपक्षोनिश्चितसाध्यवान् विपक्षः साध्यवद्भिन्नः विरुद्धवारणायसपक्षवृत्तित्वमुक्तम् वस्तुतोविपक्षवृत्तित्वमेववाच्यम् विरुद्धस्यसाधारणत्वेपिदूषकताबीजस्यभिन्नतयानस्यपार्थक्यात् यस्तूभयस्माद्व्यावृत्तः सत्वसाधारणोमतः ७३॥ सपक्षविपक्षव्यावृत्तइत्यर्थः सपक्षः साध्यवत्तयानिश्चितः विपक्षः साध्यशून्यतयानिश्चितः शब्दोऽनित्यः शब्दत्वादित्यादौ यदाशब्देऽनित्यत्वस्यसन्देहस्तदासपक्षत्वंघटादीनामेवतद्व्यावृत्तञ्चशब्दत्वमिति तदानदसाधारणम् यदातुशब्देऽनित्यत्वनिश्चयस्तदानासाधारणम् इदन्तुप्राचाम्मतम् नवीनमतन्तुपूर्वमुक्तम ७३॥ तथैवानुपसंहारी॥ श्री ६॥ ६॥ ॥श्री ६॥ ६॥ ॥ ७॥ ८॥ छी॥ ६॥

निश्चयत्वनिवेशस्यफलमाह शब्दइत्यादिना पूर्वमुक्तमिति असाधारणः साध्यासमानाधिकरणोहेतुरित्यादिनोक्तमित्यर्थः ७३

रा॰ मिहितं॥ ७२॥ अग्रेपिविपक्षत्वनिर्वचनेपिसाध्याभाववन्मात्रत्वविपक्षइत्येनह्याभायैवनिश्चितत्वांशनिवेशइतिभावः॥ श्री ६॥ श्री ६ छी॥ १६७

रा॰ग्रहस्यातइति ननुसिषाधयिषाविरहविशिष्टसिद्ध्याभावरूपेतिशेषः साध्यनिश्चयेत्यादिसम्भवादित्यतंसंदेहेतुत्वेहेतुः पक्षतेतितथा
चमूलेपक्षपदंपक्षतापरंभावप्रधाननिर्देशत्वादन्यथा आकाशाद्यन्ताभावोनित्योध्वंसप्रागभावभिन्नाभावत्वादित्यादेरनुपसंहा
रित्वाभावे नानुपपन्नेरितिध्येयम् ननुसंशयस्यनिश्चयाप्रतिवन्धकत्वेनसर्वत्रसाध्यसंदेहसत्वेपिकचित् साध्यनिश्चयसंभ

दि॰। केवलान्वयिपक्षकइति अत्रपक्षतासाध्यसंशयरूपागृह्यते तेनसर्वमभिधेयम्प्रमेयत्वादित्यादौयदासिद्धिः
सिषाधयिषाचतदासाध्यनिश्चयसम्भवेनसामानाधिकरण्यघटितव्याप्तिग्रहसम्भवात्तस्यसद्धेतोरलस्यतयासिषा
धयिषाविरहविशिष्टसिद्ध्यभावस्यतदाकेवलान्वयित्वेपितत्रनातिव्याप्तिः अनुपसंहारिणोहेत्वाभासत्वमुपपादयति
सर्वमभिधेयमित्यादिना सामानाधिकरण्यग्रह स्थलान्तराभावादिति संशयोत्पत्तिक्षणेनिश्चयवारणायनिश्चयम्प्र

मु॰। केवलान्वयिपक्षकः सर्वमभिधेयम्प्रमेयत्वादित्यादौसर्वस्यैवपक्षत्वात् सामानाधिकरण्यग्रहस्य
लान्तराभावान्नानुमितिः इदन्तुनसम्यक् पक्षैकदेशेसहचारग्रहेपि क्षतेरभावात् अस्तुवासहचारग्र
हः तावताप्यज्ञानरूपासिद्धिरेवनहेत्वाभासत्वन्तस्य॥६॥ १ तिसंशयसामग्र्याः प्रतिवन्धकत्वस्यावश्यंवाच्यतया
प्रकृतेसर्वत्रसाध्यसंदेहसत्वेनतत्पूर्वन्तत्सामग्र्याः सत्वेनसाध्यनिश्चयस्यकुत्राप्यसंभवेनव्यापकसाध्यसामानाधि
करण्यविशिष्टप्रमेयत्वादिरूपव्याप्तिग्रहानुत्पादात्तत्रानुमितिरित्यनुपसंहारिणोहेत्वाभासत्वमितिभावः क्ष
तेरभावादिति तदानीमपिकेवलान्वयिपक्षताकत्वस्यानुपसंहारित्वस्यक्षतेरभावादित्यर्थः॥ ६॥ ७॥ ६॥

वेनसामानाधिकरण्यनिश्चयोनदुर्घटइत्यतआह संशयोत्पत्तीति तदानीमपिघटोभिधेयइत्यादिनिश्चयदशायामपीत्यर्थः क्षतेरभावा
दितीति तादृशनिश्चयकालेपिसर्वमभिधेयन्नवेतिसंशयसंभवात्सर्वत्रावच्छेदेननिश्चयाभावादितिभावः ननुकिमेतावतेत्यतआह॥

रा॰॥तथाचेति। समानप्रकारकत्वेनैवेति तद्धर्मितावच्छेदकसंशयसामग्र्या एव तद्धर्मितावच्छेदकनिश्चयप्रतिबन्धकत्वेन घटत्वाव

दि॰॥तथा च तत्रानुपसंहारित्वस्य सत्वात्तस्य व्याप्तिज्ञानानुत्पादप्रयोजकत्वाभावाद्धेत्वाभासत्वानुपपत्तिरिति भावः नच सं
शयसामग्र्याः सत्वात्कथं पक्षैकदेशे साध्यनिश्चय इति वाच्यम् सर्वत्वधर्मितावच्छेदकसंशयसामग्रीसत्वेपि घटत्वा
दिधर्मितावच्छेदककसाध्यनिश्चयोत्पादे बाधकाभावात् समानप्रकारकत्वेनैव विरोधाद्समानविषयकत्वेन प्रतिब
न्धकत्वेप्याह अस्तुवेति तस्य सहचारग्रहस्य तस्य स्वरूपसत एव विरोधित्वे न तज्ज्ञानस्यानुमित्यनुत्पादप्रयोजकत्वा

मु॰॥तथापि केवलान्वयिसाध्यकत्वं तत्त्वमित्युक्तम् यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः॥ ७४ ॥ एव
कारेण साध्यवत्तावच्छेदे न हेत्वभावो बोधितस्तथा च साध्यव्यापकीभूताभावप्रतियोगित्वं तदर्थः॥ ७४॥

भावादिति भावः नच तत्र सहचारग्रहप्रयोजकस्य संशयस्य हेत्वाभासत्वं तस्यापि स्वरूपसत एव विरोधित्वात् नच संशय
विषयस्य साध्याभावविशिष्टपक्षादेरेव तत्राभासत्वमिति वाच्यम् सर्वमभिधेयमित्यादावभिधेयत्वाभावविशिष्टपक्षा
प्रसिद्धेरित्यन्यत्र विस्तरः तदर्थ इति तेनासाधारणेनातिव्याप्तिरिति भावः॥ ७४ ॥ श्रीः ७४ ॥ ॥ ७४ ॥ ७४ ॥

वच्छिन्ने चाभिधेयत्वव्याप्यघटपदवाच्यत्ववत्तानिश्चयसत्वेन तदवच्छिन्ने संशयसामग्र्यभावादिति भावः समानविषयकत्वेपि तद्विशेष्य
कसंशयसामग्र्याः तद्विशेष्यकनिश्चयप्रतिबन्धकत्वेत्यर्थः॥ श्रीः॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

रा० ननु सर्वमभिधेयमित्यादौ साध्याभावविशिष्टपक्षाप्रसिद्धावपि संशयविषयकसाध्यादेरेवाभासत्वमस्तु इत्यत आह अन्यत्रेति पर्वतो
वन्हिमानित्यादौ हेत्वाभासवारणाय यद्रूपावच्छिन्नविषयकत्वमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तितद्रूपावच्छिन्नस्यैव हेत्वाभा
सत्वेनाङ्गीकरणीयतया साध्यादेस्तथात्वादिति भावः ॥ ७४ ॥ ननु धूम इति प्रतीतेरपि विशिष्टधूमत्वादिविषयकत्वं शुद्धस्य विशि।
ष्टानतिरिक्तत्वादत स्तदर्थमाह स्वेतितदर्थत्वात् अन्तरपदार्थत्वात् पर्याप्तेः प्रत्येकवृत्तित्वे तु पर्याप्तिसम्बन्धेन तादृशावच्छेदक

दि० धूमप्रागभावत्वेति तस्य व्याप्यतावच्छेदकीभूतधूमत्वघटितत्वेन तत्सङ्ग्रहो न स्यादिति भावः स्वस्य स्वाविषय
क प्रतीतिविषयत्वरूपस्वाघटितत्वाभावाद्धर्मान्तरेति न च नीलधूमत्वस्यापि तादृश धर्मान्तराघटितत्वमस्त्येव धूम
त्वस्य नीलधूमत्वभिन्नत्वाभावादिति वाच्यम् स्वाविषयकप्रतीतिविषयत्वस्य स्वपर्याप्तावच्छेदकतानिरूपकप्रकारता

मु० असिद्धिं विभजते आश्रयासिद्ध्याद्यास्यात्स्वरूपासिद्धिरप्यथ व्याप्यत्वासिद्धिरपरा स्यादसिद्धिर
तस्त्रिधा ७५ पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ह्रदो द्रव्यं धूमवत्वादत्रासिद्धिरथापरा ७६॥
व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् पक्षासिद्धिरिति आश्रयासिद्धिरित्यर्थः॥ श्रीः ॥ छ ॥

निरूपितावच्छेदकतापर्याप्त्यनधिकरणत्वपर्यवसितस्य तदर्थत्वात् शुद्धधूमत्वपर्याप्तावच्छेदकताकप्रकारत्वनील
त्वादिविशिष्टधूमत्वपर्याप्तावच्छेदकताकप्रकारत्वयोर्भेदात् नन्वेवं वन्हिमदन्यावृत्तित्वस्य वन्हिव्याप्यतावच्छेदक
तानुपपत्तिस्तस्य वन्हित्वरूपतादृशधर्मान्तरघटितत्वात्॥ ६ ॥ त्वावच्छिन्नत्वमेव पर्याप्त्यनधिकरणत्वस्य नेवक्तव्यम् प्रत्येक
मुभयभिन्नत्वस्येव केवलधूमत्वे विशेषणविशेष्योभयपर्याप्तवच्छेदकतावच्छिन्नभेदसत्वादिति ध्येयम् वन्हिमदन्यावृत्तित्वस्येति पर्वतो व
न्हिमान् वन्हिमदन्यावृत्तेरिति सन्न्यायप्रयोगस्य सर्वसम्मतत्वेने ष्टापत्यसम्भवादिति भावः॥ छ ॥ ननु धर्मान्त ग्रंतघटितत्वे विशेष्यविध
याधर्मान्तरघटिते यत्तदन्यत्वमेव धूमत्वस्य विशेष्यविधया नीलधूमत्वघ० ॥ ६ ॥ श्रीः ॥ छ ॥ ६ ॥ ६ ॥ ॥ छ ॥ छ ॥ ६ ॥ ॥ २ ॥ छ ॥

रा॰ ०टकत्वेपिवन्हिमदन्यावृत्तित्वेवन्हिमत्वस्यतथाऽघटकत्वमितिनतत्स्वव्याप्यतानवच्छेदकतापत्तिरित्यतआह धूमान्यत्वादेरि
ति साध्यसंबन्धितावच्छेदकत्वेन साध्यव्यापकतावच्छेदकत्वेनस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतादृशधर्मत्वमे

दि॰ ०धूमान्यत्वादेर्व्याप्यतावच्छेदकत्वापत्तिभियाधर्मान्तरस्यविशेष्यविधयाऽघटकत्वविवक्षणस्याशक्यत्वा
दितिचेन्न स्वसमानाधिकरणपदेन स्वव्यापकत्वस्यविवक्षितत्वात् वन्हित्वस्यवन्हिमदन्यावृत्तित्वाव्यापकत्वा
द्धूमत्वस्यधूमान्यत्वव्यापकत्वाच्चोक्तदोषासम्भवात् स्वव्यापकत्वञ्च धर्मान्तरस्यस्वघटकसाध्यसम्बन्धितावः

मु॰ ०अपरेति स्वरूपासिद्धिरित्यर्थः नीलधूमादिकमिति नीलधूमत्वादिकं गुरुत्वयानहेतुतावच्छे
दकं स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तराघटितत्स्वैवव्याप्यतावच्छेदकत्वात् धूमप्राग
भावत्वसङ्ग्रहायस्वसमानाधिकरणेति विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता॥ ७७॥ विरुद्धयोरि
तिकपिसंयोगतदभावव्याप्यवत्तापरामर्शेपिन सत्प्रतिपक्षत्वमत उक्तम् विरुद्धयोरितितथाच॥ ६ ॥

च्छेदकत्वेनतत्रान्यथाधूमालोकान्यतरत्वस्यवन्हिव्याप्यतावच्छेदकत्वापत्तेः धूमत्वालोकत्वयोः प्रत्येकमन्यत
र त्वाव्यापकत्वादिति विरुद्धयोः परामर्शे हेत्वोरित्यत्रविरुद्धयोर्हेत्वोः परामर्श इति भ्रमवारणायाह॥ छ॥ श्री॥

वव्यापकत्वमितिभावः इतिभ्रमेति यथार्थत्वेपर्वतोवन्हिमान्धूमादित्यादौवन्ह्यभावव्याप्यपाषाणमयत्वस्यपरामर्शदशायांसत्प्र
तिपक्षानुपपत्तेः प्राचीनैः तत्रापिसत्प्रतिपक्षाङ्गीकारादितिभावः॥ श्री॥ ॥ श्री॥ ॥ छ॥ ॥ छ॥ ॥ छ॥ छ॥ छ॥ ॥

रा०साध्यसाध्याभावयोरविरोधस्थले तूभयपरामर्शसत्वेपि न सत्प्रतिपक्षव्यवहार इति मंतव्यम् ७५।७६॥७७ गन्धशून्यत्वाभावादिति।
निरवच्छिन्नत्ववत्तिकगंधाभावविरहादित्यर्थः तेनोत्पत्तिकालावच्छेदेन घटे गन्धाभावसत्वेपि न क्षतिः पक्षपदस्य पक्षतावच्छेदकविशि
ष्टार्थत्वे तूत्पत्तिकालीनत्वविशिष्टघटनिरूपित गन्धाभावनिष्ठाधेयता निरवच्छिन्नेन भवति तादृशगन्धाभाववद्विशिष्टपक्षो बाध इति भावः

दि०स्वसाध्येति स्वं सत्प्रतिपक्षत्वेनाभिमतो हेतुस्तत्साध्यविरुद्धो यः साध्याभाव इत्यर्थः ७५॥७६॥७७॥ ननूत्पत्तिका
लीन घट इत्यादि मूलोक्तमयुक्तम् तत्र पक्षे घटे गन्धशून्यत्वाभावादत आह पक्षतावच्छेदकेति कालस्येव देशस्या

मु०स्वसाध्यविरुद्धसाध्याभावव्याप्यवत्तापरामर्शकालीनसाध्यव्याप्यवत्तापरामर्शविषय इत्यर्थः।
॥७५॥७६॥७७॥ साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते॥
७८॥ पक्षः पक्षतावच्छेदकविशिष्ट इत्यर्थः तेन घटे गन्धसत्वेपि न क्षतिः एवम्मूलावच्छिन्नो वृक्षः क
पिसंयोगी त्यत्रापि बोध्यम्॥ ७८॥ इति सिद्धान्तमुक्तावल्यामनुमानम्॥

१ पि पक्षतावच्छेदकत्वे बाध
सम्भवात्तदप्रदर्शनेन मूलस्य न्यूनतापरिहारं तु माह एवमिति बोध्यमिति तत्र पक्षे वृक्षे संयोगसत्वेपि पक्षतावच्छे
दकमूलावच्छेदेन संयोगाभावादिति भावः॥ ७८ ॥ इति श्रीमुक्तावलीप्रकाशेऽनुमानखण्ड समाप्तम्॥ छ॥ श्री॥

अथवा गन्धशून्यत्वाभावात् गन्धाभावाभावादित्यर्थः गन्धसत्वादिति यावत् तथा च प्रतियोगिव्यधिकरणसाध्याभाववत्पक्षस्यैव बाधत्वेन
कथमत्र बाध इति भावः पक्षपदस्य पक्षतावच्छेदकविशिष्टार्थकत्वे च देशकालयोः पक्षतावच्छेदकत्वस्थले पक्षतावच्छेदकावच्छे
देन साध्याभाववत्वस्यापि पृथक् बाधतया न बाधानुपपत्तिरिति भावः॥ ७८॥ ६॥ २॥ छ॥ इति दिनकरीतरंगिण्यामनुमानतरङ्गः॥ छ॥

एवं सति तत्प्रकारकत्वस्य प्रमात्वघटकत्वे सति भ्रमः प्रमा च स्यादिति लक्षणद्वयस्यानवसरत्वादिति भावः नन्वेवं लक्षणाननुगम इत्यत आह
लक्ष्यस्येति अथ पाकरक्ते घटे श्यामरूपवत्ताप्रतीतेः प्रमात्वं स्यादिति चेदिष्टमेवैतत् घटस्य कदाचित् श्यामत्वात् वर्तमानस्य प्रमात्वाघटक
त्वात् अत्र यद्यपि स्मृत्यन्यज्ञानत्वरूपाऽनुभवत्वस्य निवेशे वैयर्थ्यात् ज्ञानत्वघटितमेव प्रमात्वं सुवचम् तथापि तस्य स्मृतिसाधारणतया तत्का
रणस्य प्रमाणान्तरतापत्त्या शास्त्रे प्रमाणव्यवहारौपयिकं रूपमनुभवत्वघटितमेवानुमन्यन्ते नैयायिकाः वस्तुतस्तु विशिष्टवैशिष्ट्यानुभवे विशे
षणतावच्छेदकप्रकारकनिर्णयस्य कारणतया तज्जन्यतावच्छेदककोटिप्रविष्टतयानुभवत्वस्य जातिविशेषत्वे सिद्धे ज्ञानत्वस्यानुभवत्वाघट

एवं सति निर्विकल्पकं प्रमा न स्यात् तस्य सप्रकारकत्वाभावादत आह तत्प्रमेति ननु वृक्षे कपिसंयोगज्ञानं भ्रमः प्रमा च स्या
दिति चेन्न प्रतियोगिव्यधिकरणसंयोगाभाववति संयोगज्ञानस्य भ्रमत्वात् न च वृक्षे कपिसंयोगाभावावच्छेदेन संयोगज्ञा
नं भ्रमो न स्यात् तत्र संयोगाभावस्य प्रतियोगिसमानाधिकरणत्वादिति वाच्यम् तत्र संयोगाभावावच्छेदेन संयोगज्ञान

तत्प्रमा न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम्॥१३५॥ प्रकारतादिशून्यं हि संबंधानवगाहि तत्। प्रमात्वं न स्वतो
ग्राह्यं संशयानुपपत्तितः॥१३६॥

स्य भ्रमत्वात् लक्ष्यस्याननुगमाल्लक्षणाननुगमेऽपि न क्षतिः। प्रमात्वमिति। मीमांसका हि प्रमात्वं स्वतो ग्राह्यमिति वदन्ति तत्र गुरू
णां मते ज्ञानस्य स्वप्रकाशत्वात्तज्ज्ञानप्रामाण्यं तेनैव गृह्यत इति भट्टानां मते ज्ञानमतीन्द्रियं ज्ञानजन्यज्ञानताप्रत्यक्षा॥

कत्वात्तानुभवत्वस्य वैयर्थ्यमिति कृतमपल्लवितेन। प्रामाण्यं न स्वतो ग्राह्यमिति। मूले स्वतो ग्राह्यत्वं निषिध्यते तत्र स्वतस्त्ववादिनः के इत्याकाङ्
क्षायामाह मीमांसका हीति स्वप्रकाशकत्वादिति स्वविषयकत्वादित्यर्थः तेनैव गृह्यत इति ज्ञाने गृह्यमाणे तन्निष्ठज्ञानत्वादिधर्मवत्तन्निष्ठप्रा
माण्यस्यापि ग्रहे बाधकाभावात्तन्मते सर्वं ज्ञानमयं घटो घटमहं जानामीत्याकारकमिति भावः ॥ छ॥ छ॥ ॥ ९ ॥ छ॥ छ॥

तथा चेति अयमत्रानुमानप्रकारः इयं ज्ञातता घटविशेष्यकघटत्वप्रकारकज्ञानजन्या घटवृत्तिघटत्वप्रकारकज्ञाततात्वात् या यद्वृत्तिर्यत्प्रकारि-
का ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानसाध्या यथा पटे पटत्वप्रकारिका ज्ञातता इति अनुव्यवसायेनेति ननु ज्ञानं ज्ञानस्य विषयाविषयकत्वात् कथं
विषयघटितप्रामाण्यं तस्य विषय इत्यतो ज्ञानं ज्ञानस्य विषयविषयकत्वे प्रमाणमाह विषयनिरूप्यमिति विषयाविषयकप्रत्यक्षाविषय इत्यर्थः।
ज्ञानवित्तिवेद्यो विषय इति विषयविषयकत्वनियतस्वविषयकप्रत्यक्षकं ज्ञानमित्यर्थः अतो न साध्यहेत्वोर्वैयधिकरण्यम् तथा च ज्ञाने विषयविष-

तथा च ज्ञानमनुमीयते मुरारिमिश्राणां मतेऽनुव्यवसायेन ज्ञानं गृह्यते सर्वेषामपि मते न तु ज्ञानविषयकज्ञानेन तत्ता
न प्रामाण्यं गृह्यते विषयनिरूप्यं हि ज्ञानमतो ज्ञानवित्तिवेद्यो विषयः तन्मतं दूषयति न स्वतो ग्राह्यमिति संशयेति॥
यदि ज्ञानस्य प्रामाण्यं स्वतो ग्राह्यं स्यात्तदानभ्यासदशापन्नज्ञाने प्रामाण्यसंशयो न स्यात् तत्र हि यदि ज्ञानं ज्ञातं तदा
तत्त्वेन प्रामाण्यं ज्ञातमेवेति कथं संशयः यदि तु ज्ञानं न ज्ञातं तदा धर्मिज्ञानाभावात्कथं संशयस्तस्माज्ज्ञाने प्रामाण्य-
मनुमेयम् तथा हि इदं ज्ञानं प्रमा सम्वादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथाऽप्रमा इदं पृथिवीत्वप्रकारकं ज्ञानं
प्रमा गन्धवति पृथिवीत्वप्रकारकज्ञानत्वात् एवमिदं जलत्वप्रकारकं ज्ञानं प्रमा स्नेहवति जलत्वप्रकारकज्ञान-
त्वात् न च हेतुज्ञानं कथं ज्ञानमिति वाच्यम् पृथिवीत्वप्रकारकत्वस्य स्वतो ग्राह्यत्वात् तत्र गन्धग्रहेण गन्धवद्विशे-
॥ष्यकत्वस्यापि सुग्रहत्वात्॥

यकत्वात्कप्रत्यक्षकं विषयकप्रत्यक्षाविषयत्वे सति प्रत्यक्षविषयकत्वादित्यनुमानं ज्ञानप्रत्यक्षस्य स्वविषयकत्वे प्रमाणमिति भावः। भट्टमते
च प्रत्यक्षस्यानभिषिक्ता ज्ञातता लिङ्गकानुमितिरेव बोध्येत्यन्यत्र विस्तरः अनभ्यासदशापन्नेति अनवधृतप्रामाण्यसजातीयेत्यर्थः ज्ञानमे-
व निश्चितमेव गन्धवतीति व्याप्यवति व्यापकप्रकारकत्वस्य व्यापकवति व्यापकप्रकारकत्वव्याप्यत्वादिति भावः॥ ६॥ छ॥ ६॥

ननु कथं तर्हि प्रामाण्यस्यानुमेयता सम्भवति पृथिवीत्वप्रकारकत्वस्यैव पृथिवीत्ववति पृथिवीत्वप्रकारकत्वादेरपि प्रत्यक्षसम्भवाद्
त आह तत्प्रकारकत्वेति संशयानुरोधादिति यद्यपि ज्ञाने प्रामाण्यनिश्चयो धर्मितावच्छेदकसामानाधिकरण्येन जायते सन्देहस्तु ध।
र्मितावच्छेदकसामानाधिकरण्येन प्रामाण्याभावावगाही धर्मितावच्छेदकावच्छेदेन प्रामाण्यावगाहीति कथं संशयानुपपत्तिः तथापि प्र
वृत्त्युपयुक्तस्य धर्मितावच्छेदकावच्छेदेन प्रामाण्यग्रहस्य स्वतस्त्वे संशयानुपपत्तिर्दूषणमिति ध्येयम् न च प्रामाण्यग्राहकसामग्रीसत्त्वात्क
थमग्रिमसंशयानुरोधेन प्रामाण्याग्रह इति वाच्यम् तत्राग्रिमसंशयानुरोधेन जनकदोषस्य प्रामाण्यनिश्चयप्रतिबन्धकत्वकल्पनादित्याश।
यात् ननु यदि प्रामाण्यमनुमेयं तदा प्रामाण्यग्रहवैयर्थ्यम् तथाहि अयम्पुरुष इति निश्चये प्रामाण्यसन्देहे नार्थसन्देहस्तायम्पुरुषो न वे
त्याकारकस्तोऽन्यथा पुरुषार्थिनः प्रवृत्तिर्न सम्भवति तत्र प्रामाण्यनिश्चये च ननु तत्संशयाधीनोऽर्थसन्देह इति प्रामाण्यग्रहस्य प्रवृत्तावुपयोगः प्रा

तत्प्रकारकत्वावच्छिन्नतद्विशेष्यकत्वम्परत्वतो गृह्यते संशयानुरोधात् ननु सर्वेषां ज्ञानानां यथार्थत्वात्प्रमात्वस्य
त्वेतद्विशेष्यकत्वविशेषणम्व्यर्थम् न च रङ्गे रजतार्थिनः प्रवृत्तिर्भ्रमजन्या न स्यात्तव मते भ्रमस्याभावादिति वाच्य
म् तत्र हि दोषाधीनस्य पुरोवर्त्तिनि स्वतन्त्रोपस्थितरजतभेदाग्रहस्य हेतुत्वात्॥

॥ माण्यग्रहस्यानुमित्यात्मकत्वे च प्रामाण्यानु
मापककरादिमति पुरुषत्वप्रकारकत्वादिरूपहेतुग्रहे तद्घटकतया पुरोवर्त्तिनि पुरुषत्वव्याप्यकरादिग्रहस्यावश्यकतया तेनैवायम्पुरुषो
न वेति सन्देहप्रतिबन्धसम्भवात्तत्प्रामाण्या नुमानेनेति चेन्न करादौ पुरुषत्वव्याप्यत्वग्रहम्विनापि करादिमति पुरुषत्वप्रकारकत्व
हेतोः पुरुषत्वघटितप्रामाण्यव्याप्यत्वग्रहसम्भवेन प्रामाण्यानुमानसम्भवात् एवं न्यायमतेऽनुमितेरिव द्वितीयानुव्यवसायस्यापि प्रामाण्य।
ग्राहकत्वमित्यन्यत्र विस्तरः। गुरुः शङ्कते नन्विति व्यर्थमिति व्याव र्त्याया अन्यथाख्यातेरभावादिति भावः भ्रमजन्येति न्यायनये भ्रमजन्या हि ति
स्तव मते न स्यादित्यर्थः भ्रमस्यान्यथाख्यातेः न च रङ्गगोचरविसम्वादिरजतार्थिप्रवृत्तौ रजतेदं रजतमिति ज्ञानकाले रजतभेदाग्रहसत्त्वाद्धि स
त्त्वादिप्रवृत्त्यापत्तिवारणाय दोषाधीनस्येत्युक्तम् न्यायनये दोषाधीनो यो रजततद्भ्रमस्तत्स्थानाभिषिक्तरजतभेदाग्रहस्यैव तन्मते दोषाधीनतया रज

तेरजतभेदाग्रहस्यदोषाधीनत्वादितिभावः यत्ररङ्गगोचरमेतद्रजतवद्भूतलमितिज्ञानन्तत्रविसम्वादितादशप्रवृत्तिवारणायस्वतन्त्रोप
स्थितेतिरजतविशेषणम् मुख्यविशेष्यतयोपस्थितत्वन्तदर्थः वस्तुतोरङ्गगोचरादेतद्रजतवद्भूतलमितिज्ञानादपिप्रवृत्तिरिष्टैवेतिस्वतन्त्रो
पस्थितत्वन्नदेयमितिध्येयम् हेतुत्वादिति॥ छ॥ न्यायनयेपीदंरजतमितिभ्रमेहेतुतयारजतभेदाग्रहस्यतत्रावश्यकतयातस्यैवहे
तुत्वप्रयुक्तत्वाद्दुष्टोरितिन्यायादितिभावः कार्यकारणभावद्वयकल्पनापेक्षयालाघवादाह अस्तुवेति तत्रापिसत्यरजतगोचरप्रवृत्तावपिभ्र
पिनारङ्गगोचरप्रवृत्तिपरिग्रहः रजतभेदाग्रहः रजतभेदासंसर्गाग्रहाभावः यथाश्रुतेरजतेनेदंरजतमितिग्रहेपिप्रवृत्त्यापत्तेः प्राभाक
रमतेतत्ररजतभेदग्रहाभावस्यसत्वादन्यथान्यथाख्यात्यापत्तेरिति यद्यपिपुरोवर्त्तिविशेष्यकस्यरजतभेदासंसर्गग्रहस्यसमवायेना
भावोविशेषणतयात्मनिष्ठः प्रतिबन्धकस्तदभावःकारणमितिफलितम् तथाचरङ्गेनेदंरजतमितिग्रहेपिप्रवृत्त्यापत्तिः रङ्गविशेष्यक
रजतभेदासंसर्गग्रहस्यान्यथाख्यात्यनङ्गीकर्त्तृमतेऽप्रसिद्धत्वेनतदभावस्यप्रतिबन्धकत्वासम्भवात् तथापिविषयतासम्बन्धेनप्रवृ

सत्यरजतस्थलेतुविशिष्टज्ञानस्यसत्वात्तदेवकारणम् अस्तुवातत्रापिरजतभेदाग्रहएवकारणमिति॥६॥

त्तिम्प्रतिरजतभेदासंसर्गग्रहस्यविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकोयोऽभावःसविशेषणतासम्बन्धेनप्रतिबन्धकइतिविषय
निष्ठतयाप्रतिबध्यप्रतिबन्धकभावकल्पनान्नोक्तदोषः एवञ्चतत्पुरुषीयत्वंप्रतिबध्यप्रतिबन्धकत्वयोरवच्छेदककोटौनिवेशनीयमतो
नपुरुषभेदमादायदोषः नचैवंरङ्गेइदंरजतमितिभ्रमानन्तरन्तत्रप्रवृत्तिर्नस्यात् रजतभेदासंसर्गग्रहस्यान्यथाख्यात्यापत्त्यातत्रानङ्गी
कारेणतदभावरूपस्यप्रतिबन्धकस्यसत्वादितिवाच्यम् रजतभेदोपस्थितिविशिष्टस्यैवरजतभेदासंसर्गग्रहाभावरूपस्यप्रतिबन्धकत्वो
पगमात् नचैवमपिरङ्गेइदंरजतंघटोनरजतमितिज्ञानानन्तरमप्रवृत्त्यापत्तिरितिवाच्यम् रजतभेदग्रहप्रतिबन्धकदोषस्योत्तेजकत्वकल्प
नात्तत्ररङ्गेरजतभेदग्रहानुत्पत्त्यातत्प्रतिबन्धकदोषस्यस्वीकरणीयत्वात् नचरङ्गेरजतभ्रमजनकदोषएवोत्तेजकोऽस्तुकिंरजतभेदग्रहप्रतिब
न्धकदोषस्योत्तेजकत्वस्वीकारेण एवंचरजतभेदोपस्थितिवैशिष्ट्यमपिप्रतिबन्धकेविशेषणन्नदेयंरजतभेदानुपस्थितिका॥ ६॥ छ॥

लेरङ्गे इदं रजतमिति ज्ञानात् प्रवृत्तिप्रसंगाभावात् तत्र रजतभेदासंसर्गग्रहस्य प्रतिबन्धकस्य रङ्गे रजतभ्रमजनकदोषरूपोत्तेजकविशि
ष्टत्वादिति वाच्यम् रङ्गे इदं रजतमिति भ्रमस्यान्यायमतसिद्धस्य तन्मते ऽभावेन तत्र तादृशदोषस्यानङ्गीकारात् ॥ छ ॥ सम्भवतीत्यनन्त
रं येन विसम्वादिप्रवृत्तौ तत्र हेतुत्वं स्यादिति पूरणीयम् सन्निकर्षस्याभावादिति ज्ञानलक्षणायाः प्रत्यासत्त्यन्तरस्य कल्पने तु गौरवदोष
दुष्टमित्यभिमानः हेतुतायाइत्यस्यान्वयव्यतिरेकाभ्यामिति शेषः अन्यत्रापि रङ्गगोचररजतार्थिप्रवृत्तावपि तत्कल्पनात् विशिष्टज्ञा
नहेतुत्वकल्पनात् नचात्र मानाभाव इति वाच्यम् ॥ रङ्गे रजतार्थिप्रवृत्तिरिष्टप्रवृत्तिविषयविशिष्टज्ञानसाध्या प्रवृत्तित्वात् रजते रजत
प्रकारकप्रवृत्तिवदित्यनुमानस्यैव तत्र मानत्वात् अत्राप्रयोजकमाशङ्कते नचेति लाघवेनेति सम्वादिविसंवादिभेदेन कार्यकारणभा

नचान्यथाख्यातिः सम्भवति रजतप्रत्यक्षकारणस्य रजतसन्निकर्षस्याभावात् रङ्गे रजतबुद्धेरनुपपत्तेरिति चे
न्न सत्यरजतस्थले प्रवृत्तिम्प्रति विशिष्टज्ञानस्य हेतुतायाः क्लृप्तत्वात् अन्यत्रापि तत्कल्पनात् नच सम्वादिप्रवृ
त्तौ तत्कारणं विसम्वादिप्रवृत्तौ च भेदाग्रहः कारणमिति वाच्यम् लाघवेन प्रवृत्तिमात्रे तस्य हेतुत्वकल्पनात् इ ।
त्यञ्च रङ्गे रजतत्वविशिष्टबुद्ध्यनुरोधेन ज्ञानलक्षणाप्रत्यासत्तिकल्पनेपि न क्षतिः फलमुखगौरवस्यादोषात् ॥

वद्द्वयमपेक्ष्य प्रवृत्तिमात्रे विशिष्टज्ञानस्यैव हेतुत्वकल्पना लाघवेनेत्यर्थः ॥ तथा च लाघवज्ञानरूपानुकूलतर्कस्य सत्त्वान्नाप्रयोज
कत्वमिति भावः ॥ रजतांशेपि सन्निकर्षाभावान्नान्यथाख्यातिः सम्भवतीति प्राभाकरोक्तन्दूषणमुद्धरति ॥ इत्थञ्चेति प्रवृत्तिमात्रे
विशिष्टबुद्धेर्हेतुत्वसिद्धौ चेत्यर्थः ॥ फलमुखेति कार्यकारणभावग्रहात्मकफलात्पूर्वं गौरवस्यानिर्णयाद्गौरवसन्देहस्य चाप्रति
बन्धकत्वादिति भावः छ ॥ ॥ छ ॥ नन्वस्तु विसम्वादिप्रवृत्तिसाधारणप्रवृत्तित्वावच्छिन्नम्प्रत्येव भेदाग्रहः कारणमिति न कार्यकारण
भावद्वयकल्पनागौरवम् नच विशिष्टज्ञानत्वापेक्षया इष्टभेदाग्रहाभावत्वस्य कारणतावच्छेदकत्वे गौरवमिति वाच्यम् रजतत्वविशिष्टा
नुमित्यादौ रजतभेदाग्रहत्वेन कारणत्वे तत्रैव प्रवृत्तिसाधारण्ये रजतत्व ॥ ई ॥ छ ॥ छ ॥ छ ॥ ः ॥ छ ॥ छ ॥ छ ॥ छ ॥ छ ॥

विशिष्टविषयकत्वस्यैव कार्यतावच्छेदकत्वकल्पनेनैव निर्वाहात् न्यायनयेऽपि प्रवृत्तित्वावच्छिन्नम्प्रति विशिष्टज्ञानत्वेन हेतुत्वान्तरकल्पने गौरवमिति ननु दत्तदुरोधेन कल्पनीयभ्रमात्मकरजतज्ञानार्थं ज्ञानलक्षणाप्रत्यासत्त्यादरइतिकारणबाधाह्याधितमेवमिथ्याज्ञानमित्याशङ्काम्मनसि निधाय स्थलविशेषे कारणबाधाभावादनिवार्यमेवमिथ्याज्ञानमित्याह किञ्चेत्यादिना यत्र रजते रजतभेदग्रहो न तत्र रङ्गे रजतभेदग्रहस्तत्र सति युगपदिन्द्रियसन्निकर्षे रजतरङ्गयोरिमे रजते इति ज्ञानेन किमपि बाधकम् रजतत्वेन समं संयुक्तसमवायस्य सत्त्वात् नापि दृश्यत्वज्ञाने रङ्गांशे न प्रमात्मकं विशेषणवद्विशेष्यसन्निकर्षरूपप्रमासामग्र्यभावात् किन्त्वन्यथाख्यातिरेवेति भावः॥ ननु तद्विशेष्यत्वतद्विशिष्टबुद्धिम्प्रति तत्तद्विशेषणेन तत्तद्विशेष्यघटितसन्निकर्षो हेतुरन्यथातिप्रसङ्गात् तथा च कथं रजतघटितसंयुक्तसमवायेन रङ्गे रजतत्वग्रह इत्यत आह अपि चेति अन्यथाख्यातिभयादित्यनन्तरं रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्र

किञ्च यत्र रङ्गरजतयोरिमे रजते रङ्गे वेति ज्ञानन्ज्ञानन्तत्र न कारणबाधोऽपि अपि च यत्र रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानन्तत्रोभयत्र युगपत्प्रवृत्तिनिवृत्ती स्यातां न रङ्गे रङ्गभेदग्रह रजते रजतभेदग्रहे चान्यथाख्यातिभयात् त्वन्मते दोषादेव रङ्गे रजतभेदाग्रहस्य रजते रङ्गभेदाग्रहस्य च सत्त्वात् किञ्चानुमितिम्प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्निव्याप्यधूमवद्भेदाग्रहाद्दनुमितिर्निराबाधा॥

ग्रहस्येति पूरितस्य सत्त्वादित्यनेनान्वयः। अनेन रङ्गेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री रजते इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री च प्रदर्शिता रङ्गे रजतभेदाग्रहस्येत्यादिना च रङ्गे इष्टभेदाग्रहरूपा प्रवृत्तिसामग्री रजतेऽनिष्टभेदाग्रहरूपा निवृत्तिसामग्री च प्रदर्शिता दोषादेवेति त्वन्मते न्यायाभिमतभ्रमस्थलाभिषिक्तभेदाग्रहम्प्रति दोषस्य हेतुत्वादिति भावः॥ इदन्त्विष्टभेदाग्रहः प्रवृत्तिकारणमनिष्टभेदाग्रहो निवृत्तिकारणमिति यथाश्रुताभिप्रायेण इष्टभेदोपस्थिति विशिष्टेष्टभेदासंसर्गाग्रहः प्रतिबन्धकत्वाद्भावः कारणमिति दर्शितं निष्कर्षे तु रजतभेदोपस्थिति विशिष्टरजतभेदासंसर्गग्रहस्य प्रतिबन्धकस्य रङ्गेऽभावादिति रीत्या सामग्री बोध्या नन्नु रङ्गे रजतभेदाग्रह प्रयोजक दोषस्य प्रतिबन्धकत्वान्न रङ्गे निवृत्तिरेवं रजते रङ्गभेदाग्रहप्र

का॰मु॰
दि॰
२१४

त्वरजतेप्रवृत्तिरितिकथंयुगपत्प्रवृत्तिनिवृत्त्योरापादनमित्यतआह किञ्चेतिभेदाग्रहस्यव्याप्यवह्न्यादाग्रहस्यअनुमितिर्निराबाधेतिसति
बाधाभावेऽन्यथाख्यातिरूपानुमितिर्निराबाधेत्यर्थः॥९॥ आपत्तितमिति अन्यथाख्यातिरूपमापत्तितमित्यर्थः ननुह्रदेवह्निव्याप्यधूम
वदभेदाग्रहात्ह्रदोवह्निमानित्यन्यथाख्यातिरूपानुमितिः परन्त्वगृहीतासंसर्गकज्ञानद्वयमेवात्रोक्तन्यायेन नचतत्रविशिष्टज्ञानोत्पत्तौबाध
काभावःव्याप्यवह्न्यादाग्रहस्यह्रदोवह्निमानित्यन्यथाख्यातिरूपानुमितिकारणस्यसत्त्वादितिवाच्यम् अन्यथाख्यातौप्रमाणाभावेनतादृश
कार्यकारणभावस्याकल्पनादितस्तत्रप्रमाणमप्रदर्शयति इत्थञ्चेति यद्यानन्वनुमितिम्प्रतिविशिष्टज्ञानेसैवहेतुत्वंयत्रचनतादृशविशिष्ट
बोधस्यसामग्रीतत्रलिङ्गासंसर्गाग्रहाल्लिङ्ग्यसंसर्गाग्रहस्यैवपरैरुपगमान्नापः पिण्डेवह्न्यनुमित्यनुरोधादन्यथाख्यातिरित्यतआह इ
त्यञ्चेति चकारोऽप्यर्थः ननुतादृशानुव्यवसायोनेदंविशेष्यकज्ञानेरजतत्वप्रकारकत्वविशिष्टबुद्धिरूपःपरन्तुरजतत्वप्रकारकत्वासं

यदिचविशिष्टज्ञानङ्कारणन्तदाऽयोगोलकेवन्हिव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितंसेयमुभयतःपा
शारज्जुःइत्थञ्चान्यथाख्यातौप्रत्यक्षमेवप्रमाणम् रङ्गंरजततयाऽवेदिषमित्यनुभवादितिसंक्षेपः॥१३२॥
१३३॥१३४॥१३५॥१३६॥ पूर्वंव्याप्तिरुक्तानङ्ग्रहोपायस्तुनदर्शितइत्यतस्तन्दर्शयति व्यभिचारेतिव्यभिचारग्रहस्यसं

व्याप्तिग्रहेप्रतिबन्धकत्वात्तदभावःप्रकारण
सर्गाग्रहरूपएवेत्यतआह ॥संक्षेपइति॥ विद्यमानेपिभेदग्रहे आहार्य
प्रत्यक्षोत्पादादिच्छायाउत्तेजकत्वंवाच्यम् इच्छानामुत्तेजकत्वानुरोधेनचानुमितित्वादीनामेवकार्यतावच्छेदकत्वात्प्रवृत्तित्वाव
च्छिन्नम्प्रतिभेदाग्रहाभावत्वेनपृथक्कारणत्वेनगौरवापत्त्याविशिष्टज्ञानत्वेनैवतत्रहेतुताकल्पनीयेतिविसम्वादिप्रवृत्त्यनुरोधेनान्य
थाख्यातिर्दुर्वारैवेतिभावः ननुप्रामाण्यमनुमानगम्यन्तदाभवेद्यद्यनुमानम्प्रमाणम्भवेत्तदेवनसम्भवतिव्याप्तेर्ग्रहकाभावेनाज्ञाना
दित्यतःप्रामाण्यानुमितिप्रयोजकतयाव्यभिचारस्याग्रहोऽथसहचारग्रहस्तथेति मूलेनव्याप्तिग्रहोपायोदर्श्यते सचायुक्तःस्वका
रणीभूतव्याप्तिस्वरूपज्ञानाभावादित्यतआह पूर्वंव्याप्तिरुक्तेति व्यभिचाराग्रहस्यव्याप्तिग्राहकतामुपपादयति॥ छ ॥ छ ॥ छ ॥

राम
२१४

व्यभिचारग्रहस्येति सहचारग्रहस्य तामुपपादयति एवमिति भूयोदर्शनस्य कारणत्वं खण्डयति भूयोदर्शनन्त्विति व्यतिरेकव्यभिचारमाह सकृद्दर्शनेपीति भूयोदर्शनस्याहेतुत्वेपि क्वचित्प्रयोजकतयानादर इत्याह क्वचिदिति तर्कोऽपेक्षित इतिशङ्कापनयनार्थं तर्कोऽपेक्षित इत्यर्थः॥ तद्दर्शयति तथाहीत्यादिना यद्ययमिति अयं धूमवान् पर्वतः कारणं विनेति तथा च धूमो वह्निव्यभिचारी स्यादि

व्यभिचारग्रहस्य व्याप्तिग्रहे प्रतिबन्धकत्वात्तदभावः कारणमित्यर्थः एवमन्वयव्यतिरेकाभ्यां सहचारग्रहस्यापि हेतुता भूयोदर्शनन्तु न कारणम् व्यभिचारास्फूर्त्तौ सकृद्दर्शनेपि क्वचिद्व्याप्तिग्रहात् क्वचिद्व्यभिचारशङ्काविधूननद्वारा भूयोदर्शनमुपयुज्यते यत्र तु भूयोदर्शनादपि शङ्का नापैति तत्र विपक्षे बाधकतर्कोऽपेक्षितः तथाहि वह्निविरहिण्यपि धूमः स्यादिति

व्यभिचारस्याग्रहोथ सहचारग्रहस्तथा॥ हेतुर्व्याप्तिग्रहे तर्कः क्वचिच्छङ्कानिवर्त्तकः॥ १३७॥ ९॥

यद्याशङ्का भवति तदासौ वह्निधूमयोः कार्यकारणभावस्य प्रतिसन्धानान्निवर्त्तते यद्ययं वह्निमान्न स्यात्तदा धूमवान्न स्यात् कारणं विना कार्यानुपपत्तेः यदि च क्वचित्कारणं विना कार्यं भविष्यति तदाऽहेतुक एव भविष्यतीति तत्राप्याशङ्का भवेत् ॥ तदासौ व्याघातादपसारणीया यदि हि कारणं विना कार्यं स्यात्तदा धूमार्थं वह्नेस्तृप्त्यर्थं भोजनस्य

नियमत उपादानं तवैव न स्यादिति॥ ७॥ ९॥

क्विजन्यो न स्यादिति तर्काकारो बोध्यः॥ यथास्तु तेवह्निमान्न स्याद्धूमवान्न स्यादिति तर्कस्य विषयपरिशोधकस्य व्याप्तिग्रहानौपयिकतया सङ्गतः॥ तत्रापि तादृश तर्ककारणीभूत कार्यकारणभावग्रहेपि। आशङ्का भवेत् आशङ्का प्रतिबन्धिका भवेत् व्याघातमेव दर्शयति यदि हीत्यादिना

ननु तर्कस्य व्याप्याद्यव्याप्यापादकत्वज्ञानङ्कारणन्तत्र व्याप्तिज्ञानप्रतिबन्धकव्यभिचारशङ्कानिवर्तकस्तर्कोऽपेक्षित एवमग्रेयीम
नवस्थेत्यत आह यत्रेति स्वत एव शङ्कासामग्रीविरहादेव न तर्कापेक्षेत्यनन्तरमतो नानवस्थेति शेषः। ननु तर्कस्य न व्यभिचारशङ्का
निवर्तकत्वं तर्ककारणीभूतव्याप्तिज्ञानेनैव तन्निवृत्तेः सम्भवादिति चेदत्र केचित् अनाहार्यशङ्कायास्तर्ककारणीभूतज्ञानेन निरास
संभवेऽप्याहार्यशङ्कायास्ततो निवृत्तिर्न सम्भवति आहार्यज्ञानस्यातत्प्रतिवध्यत्वात् किन्तु तर्केणैव तथाहि अनिष्टप्रसञ्जनात्मकेन तर्के।
णापादकज्ञाने आपाद्यज्ञानरूपानिष्टसाधनत्वज्ञानजननद्वारा पादकज्ञाने द्वेषो जन्यते तेन चापादकज्ञाने इच्छाप्रतिबन्धः क्रियते
॥ एवञ्चेच्छारूपकारणविरहादेव नाहार्यशङ्कोत्पत्तिरित्यर्थवशसम्पन्नमेव तर्के तन्निवर्तकत्वमिति केचित्तु तर्कस्य शङ्कानिवर्त
कत्वम्व्याप्तिज्ञानकारणीभूतो यो व्यभिचारशङ्काविरहस्तत्सम्पादकत्वम् एवञ्च व्यभिचारशङ्काप्रतिबन्धकतयान्तर्कस्योत्तेजकत

यत्र स्वत एव शङ्कानावतरति तत्र न तर्कापेक्षापीति तदिदमुक्तन्तर्कः क्वचिच्छङ्कानिवर्त
क इति इदानीम्परकीयव्याप्तिग्रहप्रतिबन्धार्थमुपाधिन्निरूपयितुमाह॥ छ॥ ई॥ ई॥ छ॥

योत्तेजकाभावविशिष्टव्यभिचारशङ्काविरहसम्पादकत्वमक्षुण्णमेव तर्कस्येत्याहुः परे तु तदापादककापत्तित्वे नाहार्यानाहार्य
साधारणतद्विशिष्टबुद्धित्वावच्छिन्नम्प्रति प्रतिबन्धकतया तर्कस्य व्यभिचारशङ्कानिवर्तकत्वमित्याहुः तर्कश्चाहार्यारोपविशेषः ॥
तत्त्वञ्च मानसत्वव्याप्यो जातिविशेषस्तर्कयामीत्यनुभवाच्चित्तासाविशेषनिवर्तकतया वा सिद्ध इति तर्कश्च द्विविधो विषयपरिशो
धको व्याप्तिग्राहकश्चेति ॥ तत्र विषयपरिशोधको निर्वह्निः स्यान्निर्धूमः स्यादित्यादिः ॥ धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न
स्यादित्यादिश्च व्याप्तिग्राहकः ॥ विस्तरस्तु अन्यत्रानुसन्धेयः ॥ इदानीम्व्याप्तिग्रहोपायनिरूपणोत्तरम्व्याप्तिनिश्चयाभावप्रयोजक
व्यभिचारशङ्काकारणज्ञानविषयत्वेनोपाधेः स्मरणे सति तया च प्रसङ्गसङ्गत्योपाधिनिरूपणमितिभावः ॥ ई ॥ छ ॥ छ ॥ छ ॥

सिद्धिविषयत्वरूपसाध्यत्वस्य सिद्धिजनकत्वरूपसाधनत्वस्य च सोपाधावभावादभिमतेति। यो यदवच्छिन्नव्यापकत्वे सति यदवच्छिन्ना-
व्यापकः स तदवच्छिन्नसाध्यकतदवच्छिन्नहेतावुपाधिरित्यर्थः। यथाश्रुतेऽभिमतस्य विशेषणत्वे यत्र न तदभिमानस्तत्राव्याप्तिः स्यात्॥
यदवच्छिन्नविवक्षणाद्गुणकर्मान्यत्वविशिष्टसत्तावाञ्जातिमत्त्वादित्यादौ संयोगी गुणकर्मान्यत्वविशिष्टसत्तात्वादित्यादौ च नाव्याप्त्यतिव्याप्ती
व्यापकत्वाव्यापकत्वे एकप्रकारेणैकसम्बन्धेन च विवक्षिते। तेन द्रव्यत्वत्वेन समवायसम्बन्धेन च वन्हिमत्त्वव्यापकस्य द्रव्यत्वस्य हि त्वा-
दिना संयोगादिसम्बन्धेन च धूमवत्त्वाव्यापकत्वेऽपि वन्हिमान् धूमादित्यत्र द्रव्यत्वादौ नातिव्याप्तिः॥ स श्याम इति काकः श्यामो मित्रातनयत्वा-

साध्यस्येति साध्यत्वाभिमतव्यापकत्वे सति साधनत्वाभिमताव्यापकत्वमुपाधिरित्यर्थः॥ ननु स श्यामो मित्रातनयत्वा-
दित्यत्र शाकपाकजन्यत्वं नोपाधिः स्यात्तस्य साध्यव्यापकत्वाभावाच्छ्यामत्वस्य घटादावपि सत्त्वात् एवं वायुः प्रत्य-
क्षः प्रत्यक्षस्पर्शाश्रयत्वादित्यत्रोद्भूतरूपवत्त्वं नोपाधिः स्यात् प्रत्यक्षत्वस्यात्मादिषु सत्त्वात् तत्र च रूपाभावात् एवं ध्वंसो

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा॥ स उपाधिर्भवेत्तस्य निष्कर्षोऽयं प्रदर्श्यते॥ १३८॥ छ॥

विनाशी जन्यत्वादित्यत्र भावत्वं नोपाधिः स्याद्विनाशित्वस्य प्रागभावे सत्त्वात् तत्र भावत्वाभावादिति चेन्न यद्धर्मावच्छिन्नसा-
ध्यव्यापकत्वं तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थे तात्पर्यात्॥ ‘‘दित्यादावित्यर्थः तेन वक्ष्यमाणे ध्वंसो विनाशी जन्यत्वा-
दित्यनेन न पौनरुक्त्यम् अस्य साधनावच्छिन्नसाध्यव्यापकत्वादग्रिमस्य साधनरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात् साध्याव्यापकत्वा-
मुपपादयति॥ श्यामत्वस्येति। ननु साधनावच्छिन्नसाध्यव्यापकत्वं विवक्षणीयमतो नोक्ताव्याप्तिरतः पक्षधर्मावच्छिन्नसाध्यव्यापकोपाधाव-
व्याप्तिमाह एवं वायुरिति। अत्र प्रत्यक्षत्वस्योद्भूतरूपस्य व्यापकत्वे रूपस्य सुतरामव्यापकत्वमित्युद्भूतपदस्यार्थं तथाप्युपाधेः साध्यव्यापकत्वे कार्य-
कारणभावलक्षणानुकूलतर्कदर्शनार्थत्वादिति ध्येयम् पक्षधर्मावच्छिन्नसाध्यव्यापकत्वोक्तौ तु पूर्वोक्तशाकपाकजत्वाव्याप्तिरिति भावः अव्याप्तीः परि-

मित्वात्तनत्पत्वेत्यादिना॥ व्यभिचारिणि त्विन्याद्विवायुःप्रत्यक्षोद्रव्यत्वादित्यादौ प्रत्यक्षत्वरूपसाध्याधिकरणमात्माउद्भूतरूपात्मकोपाधिशून्यं
साध्यव्यभिचाराधिकरणञ्च गगनन्तद्न्यतरत्वावच्छिन्नसाध्यव्यापकत्वस्योद्भूतरूपेऽभावादुक्तमुपाध्यधिकरणमिति उद्भूतरूपाधिकर
णपरमाणवाकाशान्यतरत्वावच्छिन्नसाध्याप्रसिध्यात्तद्दोषतादवस्थ्यमतः साध्याधिकरणमिति। उद्भूतरूपाधिकरणम् यत्प्रत्यक्षत्वाधिक
रणंघटादिस्तद्वृत्तिद्रव्यत्वाव्यापकधर्मावच्छिन्नसाध्यव्यापकत्वाभावादुक्तं यच्चेत्यादि तत्रापि साध्यव्यभिचाराधिकरणपरमाणुघटान्य
तरत्वावच्छिन्नद्रव्यत्वात्मकसाधनव्यापकत्वादुपाधिशून्यमिति तत्रैवोपाध्यधिकरणसाध्याधिकरणंघटउपाधिशून्यमधिकरणमात्मातद्न्यत
रत्वावच्छिन्नसाध्यव्यापकत्वाभावात्साध्यव्यभिचाराधिकरणमिति। उद्भूतरूपत्वाधिकरणंयत्प्रत्यक्षत्वाधिकरणंघटःयच्चोद्भूतरूपशून्य

मित्वात्तनत्पत्वावच्छिन्नप्रयामत्वस्यव्यापकंशाकपाकजत्वन्तद्वच्छिन्नसाधनाव्यापकञ्च एवमस्य स्वधर्मेवहिर्द्रव्यत्वा
वच्छिन्नप्रत्यक्षत्वस्यव्यापकमुद्भूतरूपवत्त्वम् एवंबहिर्द्रव्यत्वावच्छिन्नसाधनस्याव्यापकञ्च एवन्ध्वंसोविनाशीजन्य
त्वादित्यत्र जन्यत्वावच्छिन्नसाध्यव्यापकत्वंभावत्वम् सद्हेतावेतादृशोधर्मोनास्तियदवच्छिन्नसाध्यस्यव्यापकन्तद्वच्छि
न्नस्यसाधनस्य चाव्यापकंकिञ्चित्स्यात् व्यभिचारिणि तु उपाध्यधिकरणंयत्साध्याधिकरणंयच्चोपाधिशून्यंसाध्यव्यभिचा
राधिकरणन्तद्न्यतरत्वावच्छिन्नस्यसाध्यस्यव्यापकत्वंसाधनस्यवाव्यापकत्वमुपाधेरंततःसम्भवतीति१३८॥ ६॥ छ॥

स्यप्रत्यक्षत्वाभावाधिकरणमतीन्द्रियरूपादि तद्न्यतरत्वावच्छिन्नद्रव्यत्वरूपसाधनाव्यापकत्वस्योद्भूतरूपेऽभावात्साध्याभावाधिकरणमितिपरि
त्यज्यसाध्यव्यभिचाराधिकरणमित्युक्तम् तदर्थश्च साधननिष्ठसाध्यव्यभिचारनिरूपकाधिकरणत्वं अन्ततइति नादृशधर्मोन्नरस्यास्फूर्त्तिवित्य।
र्थः नचसाध्यव्यापकत्वंसाध्यनिष्ठव्याप्तिनिरूपकत्वन्तथाचधूमवत्साध्यव्यापकेधूमादिनिष्ठव्याप्तेःकेवलधूमत्वावच्छिन्नत्वात्कथंतादृशधर्मोन्न
रावच्छिन्नधूमादिनिष्ठव्याप्तिनिरूपकत्वमार्द्रेन्धनादीनामितिवाच्यम् तद्धर्माधिकरणीभूतसाध्याधिकरणनिष्ठाभावाप्रतियोगित्वरूपस्यै
वतद्धर्मावच्छिन्नसाध्यव्यापकत्वस्यलक्षणेप्रवेशोनतुयद्धर्मावच्छिन्नसाध्यनिष्ठव्याप्तिनिरूपकत्वस्येत्याशयात्॥ श्री६॥ ६॥ छ॥

धूमवान्वह्नेरित्यादावयःपिण्डमहानसान्यतरत्वावच्छिन्नसाध्यव्यापकं व्यञ्जनवत्त्वादिकं संग्राह्यमेवेति ध्येयम्॥१३८॥ अत एव यद्धर्माव
च्छिन्नत्वघटितनिरुक्तलक्षणस्य तात्पर्यविषयत्वादेव एतदनुसारेण निरुक्तलक्षणानुसारेण स्वस्वसाध्यमिति षष्ठीतत्पुरुषभ्रमम् व्या
वर्तयितुमाह स्वञ्चेति नव्यास्तु यद्भावेन यद्धृदन्यत्वेन वा साधनवति साध्याभाव उन्नीयते स उपाधिर्लाघवात् अत एव जलत्वतेज
स्त्वयोस्तदुभयत्वेन रूपेण न कश्चिदप्युपाधित्वमित्याहुः तद्धर्मवत्युपाधिव्यभिचारेण तद्धर्माधिकरणीभूतं यदुपाध्यभावाधिकरणन्तद्वृ

अत एव लक्ष्यमप्युपाधिस्वरूपमेतदनुसारेण दर्शयति सर्वे इति स्वञ्च साध्यञ्च स्वसाध्ये तयोर्व्यभिचारितेत्यर्थः॥ उपाधे
र्दूषकताबीजमाह व्यभिचारस्येति उपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानमुपाधेः प्रयोजनमित्यर्थः। तथाहि यत्र शु
द्धसाध्यव्यापक उपाधिस्तत्र शुद्धेनैवोपाधिव्यभिचारेण साध्यव्यभिचारानुमानम् यथा धूमवान्वह्नेरित्यादौ वह्निर्धूमव्यभिचारी
तद्व्यापकार्द्रेन्धनसंयोगव्यभिचारित्वादिति व्यापकव्यभिचारिणो व्याप्यव्यभिचारावश्यकत्वात् यत्र तु किञ्चिद्धर्मावच्छि

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः। हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता १३९। व्यभिचारस्यानुमा
नमुपाधेस्तु प्रयोजनम्॥

न्नसाध्यस्य व्यापक उपाधिस्तत्र तद्धर्मवति उपाधिव्यभिचारेण साध्यव्यभिचा
रानुमानम् यथा स श्यामो मित्रातनयत्वादित्यादौ मित्रातनयत्वं श्यामत्वव्यभिचारि मित्रातनये शाकपाकजत्वव्यभिचा
रित्वादिति बाधानुन्नीतपक्षेतरस्तु साध्यव्यापकताग्राहकप्रमाणाभावात् स्वव्याघातकत्वाच्च नोपाधिः॥ ॥ ॥

त्वेन वायुः प्रत्यक्षः प्रमेयत्वादित्यादौ तु प्रमेयत्वं प्रत्यक्षत्वव्यभिचारि बहिर्द्रव्ये उद्भूतरूपव्यभिचारित्वादित्यादि द्रष्टव्यम् ननु पक्षेतरत्वे
न व्याप्तिः न च तत्स्य लक्ष्यान्तमेव। एकाश्रये येषामित्यादिमूलेन प्रदर्शितस्य लक्षणावच्छेदकस्य तत्राभावात् तत्र हेतौ। पक्षेतरत्वव्यभिचारस्य
पक्षमात्रे एव सम्भवात् साध्यव्यभिचारस्य तन्मात्रे असम्भवादत आह। बाधानुन्नीतेति। स्वव्याघातकत्वादिति। उपाधिमात्रस्य दूषकत्वव्या
घातकत्वादित्यर्थः॥ पक्षेतरत्वस्योपाधित्वे सर्वत्रानुमाने पक्षेतरत्वस्योपाधेः सम्भवादनुमान ॥ ॥ ॥ ॥ ॥ ॥ ॥

मात्रोच्छेदापत्त्याव्यभिचारानुमानाधीनस्योपाधेर्दूषकत्वस्यासम्भवादितिभावः॥ छ॥ ननुतथापियत्रसाध्यव्यापकताग्राहकम्प्रमाणमस्तितत्रपक्षेतरत्वेलक्षणातिव्याप्तिर्दुर्वारेत्यतआह वाधोन्नीतस्त्विति वाधेनपक्षेसाध्याभाववत्तयाउन्नीतःसाध्यव्यापकत्वेननिश्चितइत्यर्थः।संदिग्धोपाधिरपीति। पक्षेसाध्यसन्देहेनसाध्यव्यापकतासन्देहस्यपक्षेतरत्वेसम्भवादितिभावः।नचस्वव्याघातकत्वेनानुपाधित्वादेवोद्भावनसंभवेसम्प्रदायमात्रेणहेतुत्वकथनमसङ्गतमितिवाच्यम् यत्रसाध्यव्यापकताग्राहकतर्कावतारस्तत्र व्यापकव्यभिचारिणोव्या।

वाधोन्नीतस्तु उपाधिर्भवत्येव यथावन्हिरनुष्णः कृतकत्वादित्यादौप्रत्यक्षेणवन्हावुष्णत्वग्रहेवन्हीतरत्वमुपाधिः।यत्रतूपाधेःसाध्यव्यापकतासंदिह्यतेसंसंदिग्धोपाधिः पक्षेतरस्तु संदिग्धोपाधिरपिनोद्भावनीयः कथकसम्प्रदायानुरोधात् केचित्तुसत्प्रतिपक्षोन्नायनेमुपाधेःफलन्तथाहि अयोगोलकन्धूमवद्वन्हेरित्यादौअयोगोलकन्धूमाभाववत् आर्द्रेन्धनाभावादितिसत्प्रतिपक्षसम्भवात् इत्यन्यच्चसाधनव्यापकोपिक्वचिदुपाधिः यथाकरकापृथिवीकठिनसंयोगव

॥ शब्दोपमानयोर्नैवपृथक्प्रामाण्यमिष्यते १४० अनुमानगतार्थत्वादितिवैशेषिकंमतम्॥ छ॥

त्वादित्यादौ अनुष्णाशीतस्पर्शवत्त्वम् नचात्रस्वरूपासिद्धिरेवदूषणमितिवाच्यम् सर्वत्रोपाधेर्दूषणान्तरसाङ्कर्यात्॥अत्रचसाध्यव्यापकःपक्षावृत्तिरुपाधिरितिवदन्ति शब्दोपमानयोरिति वैशेषिकाणांमतेप्रत्यक्षमनुमानञ्चप्रमाणम् शब्दोपमानयोस्तु अनुमानविधयैवप्रामाण्यम् तथाहिदण्डेनगामानयेत्यादिलौकिकपदानिवैदिकपदानिवा॥१॥

पव्यभिचारावश्यम्भावेनव्यभिचारानुमापकत्वरूपस्यदूषकत्वस्यव्याघातासम्भवात् सत्प्रतिपक्षोन्नायकत्वेनोपाधेर्दूषकतावादिनामन्तआह केचित्त्विति इत्यन्यत्त्वेति सत्प्रतिपक्षोन्नायकतयादूषकत्वेचेत्यर्थः अत्रचसत्प्रतिपक्षोन्नायकत्वपक्षेचपक्षावृत्तिरितिपक्षवृत्तित्वेतुपक्षेतदभावेनसाध्याभावासाधनादितिभावः।गुरुमतेलौकिकःशब्दोऽनुवादकःवैदिकएवप्रमाणन्तन्मतनिराकरणायाह वैदिकेति।

॥अत्रस्वर्गकामोयजेतेत्यादिपदत्वेनपक्षता नेनविशेषतःसंसर्गसिद्धिरितिद्रष्टव्यम्॥ श्री१॥ छ॥ छ॥ छ॥ १॥

तात्पर्यविषयेति अत्र ब्राह्मणे विद्येत्यादौ यद्धाधिकरणत्वं संसर्गे तात्पर्यं तद्धाविषयत्वादि संसर्गेणार्थान्तरवारणाय तात्पर्यविषयत्वं संसर्गे
विशेषणं तात्पर्यज्ञाने इतरपदार्थत्वेनेतरपदार्थस्य प्रवेशेन ह्युटत्वादिना स्मृतस्य संसर्गे न सिद्धेः इतः स्मारितेति स्मारितत्वञ्च वृत्त्या बोध्यम् तेन
न वस्तुपदात् समवायेनाकाशत्वादिनोपस्थापितेन रूपेण संसर्गसिद्ध्यभावेऽपि न क्षतिः हेतौ चायमेति पुत्रो एतत्पुरुषोपसार्यतामित्यादौ राजः पुरुष
इत्यादिभागे राजपुरुषयोर्योग्यपार्थयोः संसर्गे तात्पर्याभावेन साध्याभावाद्व्यभिचार इत्याकाङ्क्षाविशेषणं न चेदम्पदमनेन पदेन सहाभुकसंस
र्गेणेतरार्थान्वितस्वार्थबोधजनकत्वमिति पदतात्पर्यार्थकम् तेन नाकाङ्क्षापाद इतरांशवैयर्थ्यप्रसङ्गः। वह्निना सिञ्चतीत्यादिवाक्यसंसर्गप्र
मापूर्वकत्वसाध्याभावेन व्यभिचारवारणाय हेतौ योग्यतापदम् नीलो घटो द्रव्यम्पट इत्यादिनीलः पट इत्यादिभागे नीलपटयोराकाङ्क्षायोग्यता

तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् घटमानयेतिपदकदम्बकवत् य
द्वा एते पदार्था मिथः संसर्गवन्तः योग्यतादिमत्पदोपस्थापितत्वात् दृष्टपदार्थवद्दृष्टान्तेऽपि दृष्टान्तान्तरेण साध्यसिद्धिरि
ति एवङ्गवयव्यक्तिप्रत्यक्षानन्तरङ्गवयपदङ्गवयत्वप्रवृत्तिनिमित्तकम् असति वृत्त्यन्तरे वृद्धैस्तत्र प्रयुज्यमान
त्वात् असति वृत्त्यन्तरे वृद्धैर्यत्र यत्प्रयुज्यते तत्र तन्निमित्तप्रवृत्तिनिमित्तकं यथा गोपदं गोत्वप्रवृत्तिनिमित्तकम् यद्वा
गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन पक्षधर्मताबलाद्गवयत्वप्रवृत्तिनिमित्तकत्वं सिध्यति॥ ९॥ ६॥

सत्वेन हेतुसत्त्वाद्व्यभिचारवारणाय सन्निपदम्॥ कदम्बपदञ्चाकाङ्क्षादीनाम्परस्परप्रतियोगित्वलाभाय अन्यथा साध्यस्य परस्परार्थ
घटितत्वेन व्यभिचारप्रसङ्गात् नन्विष्टतावच्छेदकप्रकारकप्रवृत्तिविशेष्यकज्ञानस्य प्रवर्तकतया संसर्गज्ञानपूर्वकत्वानुमितेरनाद्दशन
याकर्यं प्रवर्तकत्वम्॥ अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमेन प्रमापूर्वकत्वेन प्रमापूर्वकत्वसिद्धावपि पुरोवर्त्तिविशेष्य
करजतत्वादिप्रकारकज्ञानस्य तत्स्यादनुत्पत्तेस्तदर्थे शब्दप्रामाण्यस्वीकार इत्यत आह यद्वेति मिथः संसर्गइति। तात्पर्यविषयपरस्पर
संसर्गवन्त इत्यर्थः। तेन नातात्पर्यविषयसंसर्गमादायार्थान्तरम् ननु दृष्टान्ते साध्यसिध्यभावात्कथमन्याप्तिग्रह इत्यत आह दृष्टान्तेपीति ९॥

का०मु०
दि०
२१८

ननु सर्वत्र शब्दश्रवणानन्तरमनुमितिरूपकार्यान्यथानुपपत्त्या व्याप्तिज्ञानं कल्पनीयमित्यत आह किञ्चेति पदज्ञानं कल्पयित्वेति पद
स्मरणं कल्पयित्वेत्यर्थः वह्न्यादिशब्देनार्थस्येव वह्न्यादिरूपेणार्थेवापि वह्न्यादिपदस्मरणसम्भवादाद्यत्वादिवद्वाचकत्वादिसम्बन्धस्या
पि स्मारकत्वादिति भावः। इदमुपलक्षणम् आकाङ्क्षादिज्ञानं कल्पयित्वेत्यपि बोध्यम् मणिकृतस्त्वेते पदार्थाः परस्परसंसर्गवन्तः यो
ग्यतादिमत्पदोपस्थापितत्वादित्यनुमाने योग्यताज्ञानं लिङ्गविशेषणम् लिङ्गस्य निश्चितस्यैव निश्चायकतया योग्यतायाश्च संशयेऽपि शाब्दबोधदर्श
नादतः पृथगेव शब्दो मानमिति वदन्ति मिश्रास्त्वनुमानमुद्रया शब्दस्य बोधकत्वे घटमानयेति स्वरूपयोग्यम् घटः कर्मत्वमानयनं कृतिरिति स्व

तच्च न दूषयति। तन्नसम्यगिति व्याप्तिज्ञानं विनापि शब्दादिना बोधस्यानुभवसिद्धत्वात् नहि सर्वत्र शब्दश्रवणानन्तरम्व्या
प्तिज्ञाने प्रमाणमस्तीति किञ्च सर्वत्र शब्दस्थले यदि व्याप्तिज्ञानं कल्प्यते तदा सर्वत्रानुमितिस्थले पदज्ञानं कल्पयित्वा शाब्द

तन्न सम्यग्विना व्याप्तिबोधं शब्दादिबोधतः ॥१४१॥ त्रैविध्यमनुमानस्य केवलान्वयिभेदतः। द्वैविध्यं तु भवे
द्व्याप्तिरन्वयव्यतिरेकतः ॥१४२॥ अन्वयव्याप्तिरुक्तैव व्यतिरेकादिहोच्यते। साध्याभावव्यापकत्वं हेत्वभावस्य
यद्भवेत् ॥१४३॥

बोधएव किन्त्वस्वीक्रियतामिति ध्येयम् ॥१३९॥१४०॥१४१ त्रैविध्यमिति अनुमानं हि त्रिविधं केवला
न्वयि केवलव्यतिरेकि अन्वयव्यतिरेकि भेदात् तत्रासद्विपक्षः केवलान्वयि ॥ छ॥ ९॥ छ॥ ९॥

१ पायोग्यमितिनस्यात्

अनुमानस्योभयत्रापि सम्भवात् नचाकाङ्क्षाघटितहेत्वभावान्नानुमितिस्तत्रेति वाच्यम् आकाङ्क्षाभ्रमेणानुमितिसम्भवात् विषयाबाधाच्च
तस्याः प्रमात्वात् शब्दप्रामाण्ये च स्वभावात्तादृशशब्दस्य बोधकत्वमित्याहुः। परे तु घटात्पृथगित्यादौ घटावधिकं पृथक्त्वप्रकारेण निरवच्छिन्न
विशेष्यताकः पृथक्त्वाश्रयस्य शाब्दबोधः सर्वानुभवसिद्धः स चास्माकं तादृशानुपूर्वीकपदज्ञानत्वेन तादृशशाब्दबोधं प्रति हेतुत्वादुपप
द्यते वैशेषिकाणां तु पृथक्त्वं घटावधिकं घटपदसाकाङ्क्षपृथक्पदस्मारितत्वादित्यनुमानेन तन्निर्वाहः पक्षविधया पृथक्त्व॥ ६॥

राम
२१८

का॰मु॰ स्याभानेपि तदाश्रयस्याभानात् न च पटस्य सीकृत्य पटो घटावधिकपृथक्त्ववानित्यनुमित्या तन्निर्वाह इति वाच्यम् पटादिनिष्ठविशेष्यताया स्तत्र पक्षतावच्छेदकीभूतपट त्वावच्छिन्नतया निरवच्छिन्नविशेष्यताकतादृशशाब्दबोधसमानाकारकत्वस्य तथाप्यनिर्वाहादित्याहुरि त्यादिक्॥ १३९ ॥ १४० ॥ १४१ ॥ तत्र तेषु मध्ये असद्विपक्ष इति अत्यन्ताभावाप्रतियोगि साध्य इत्यर्थः॥ यथाश्रुते सिद्ध्यसिद्धिव्याघा तात् अत्यन्ताभावाप्रतियोगित्वस्य च प्रमेयत्वादौ सत्वाल्लक्षणसमन्वयः न चैतन्न सम्भवति प्रमाविषयत्वरूपस्य तस्य नानात्वेनानुगा॰

यथा घटोऽभिधेयः प्रमेयत्वादित्यादौ तत्र हि सर्वस्यैवाभिधेयत्वाद्विपक्षासत्वम् असत्सपक्षः केवलव्यतिरे की यथा पृथिवीइतरेभ्यो भिद्यते गन्धवत्वादित्यादौ तत्र हि जलादित्रयोदशभेदस्य पूर्वमनिश्चिततया निश्चितसा ध्यवतः सपक्षस्याभावात्॥ सत्सपक्षविपक्षोऽन्वयव्यतिरेकी यथा वन्हिमान् धूमादित्यादौ तत्र सपक्षस्य महा नसादेर्विपक्षस्य जलह्रदादेश्च सत्वादिति तत्र हि व्यतिरेकिणि व्यतिरेकव्याप्तिज्ञानङ्कारणन्तदर्थं व्यतिरेके व्याप्तिन्निर्वक्ति साध्याभावेति साध्याभावव्यापकीभूताभावप्रतियोगित्वमित्यर्थः अत्रेदम्बोध्यम्॥ यत्स म्बन्धेन यद्दवच्छिन्नं प्रतियेन सम्बन्धेन येन रूपेण व्यापकता गृह्यते तत्सम्बन्धावच्छिन्नप्रतियोगिताक तद्धर्मावच्छिन्नाभावज्ञानात् तत्सम्बन्धावच्छिन्नप्रतियोगिताकतद्धर्मावच्छिन्नाभावस्य सिद्धिरिति॥ ९ ॥

मादिति वाच्यम् प्रमात्वस्यैव परस्परासम्बन्धेनानुगतत्वात् इत्यञ्च प्रमेयत्वादेर्व्यतिरेकित्वभ्रमेपि केवलान्वयित्वमेवेति मन्तव्यम् असत्सपक्ष इ ति सिद्ध्यसिद्धिव्याघातादत्राप्यगृहीतहेतुसहचारं यद्व्यतिरेकि साध्यन्तत्क त्वमर्थो बोध्यः सत्सपक्षेति॥ गृहीतान्वयव्यतिरेकिसाध्यकमित्यर्थः यत्सम्बन्धेन यदवच्छिन्नं प्रतीति यत्सम्बन्धावच्छिन्न यद्रूपावच्छिन्नव्याप्यतानिरूपितव्यापकता गृह्यते इत्यर्थः॥ श्री ९ ॥ ९ ॥ ७ ॥ ६

का मु
हि
२१९

इतरव्याप्यतेति इतरस्य व्याप्यतेत्यर्थः तादात्म्येनेतरव्यापकतेति पाठे तादात्म्यसम्बन्धावच्छिन्नायेतरनिष्ठव्याप्यतातन्निरूपितव्यापकतेत्यर्थः
तादात्म्यसम्बन्धेनेति तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिकाभावः सिद्ध्यतीत्यर्थः। येनसम्बन्धेनव्याप्यतागृह्यते इत्यनुक्तौ तु तादात्म्येनेतरस्य
व्याप्यता यत्र गृहीता तत्रेतरान्यत्वाभावस्य सिद्धिः स्यादिति भावः। संयोगसंबन्धावच्छिन्नप्रयोगिताकवन्ह्यभावेनेति सावधारणम् तेन सम्ब
न्धान्तरावच्छिन्नप्रतियोगिताकेन न तत्सिद्धिरित्यर्थः अनेन च येनसम्बन्धेन व्यापकता गृह्यते इत्यस्य फलं सूचितम् प्रदर्शितरीत्यैव ये
न रूपेण यदवच्छिन्नेत्यनयोरपि प्रयोजनमूह्यम् ननु साध्यसाधनसहचारज्ञानाभावात्कथं व्यतिरेकव्याप्तिज्ञानमित्यत आह अत्र चेति
।तथा च व्यतिरेकसहचारेणैव व्यतिरेकव्याप्तिग्रहान्नान्वयसहचारग्रहापेक्षेति भावः। ननु साध्यप्रसिद्धिं विना तदभावज्ञानेऽव्य

इत्यत्र च यत्र विशेषणतासम्बन्धेनेतरत्वव्यापकत्वङ्गन्धात्यन्ताभावे गृह्यते तत्र गन्धाभावाभावेनेतरत्वात्यन्ता
भावः सिद्ध्यति यत्र तु तादात्म्यसम्बन्धेनेतरव्यापकत्वङ्गन्धाभावस्य गृह्यते तत्र तादात्म्यसम्बन्धेनेतरस्याभावः
सिद्ध्यति स एवान्योन्याभावः एवं यत्र संयोगसम्बन्धेन धूमम्प्रति संयोगसम्बन्धेन वन्हेर्व्यापकता गृह्यते तत्र सं
योगसम्बन्धावच्छिन्नप्रतियोगिताकवन्ह्यभावेन जलह्रदे संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावः
सिद्ध्यति अत्र च व्यतिरेकव्याप्तिग्रहे व्यतिरेकसहचारज्ञानङ्कारणम्॥ श्रीः॥ श्रीः॥ छ॥ छ॥ छ॥

तिरेकव्याप्तेर्दुर्ग्रहत्वं स्यात् साध्यसिद्धौ च सिद्धसाधनमिति चेन्न साध्यस्य घटादावेव प्रत्यक्षसिद्धत्वात्पृथिवीतरभिन्नेत्युद्देश्यप्रती
तेरसिद्धत्वान्न सिद्धसाधनम् पक्षतावच्छेदकनानात्व एवांशतः सिद्धसाधनस्य दोषत्वात् अत एवानित्ये वाङ्मनसे इत्यत्र वागिति बुद्धे
रुद्देश्याया अनित्यत्वस्य सिद्धत्वेनांशतः सिद्धसाधनमिति ननु तथापि घटः कथं पक्षः साध्यस्य निश्चयेन तत्संदेहसिषाधयिषयोर
भावादिति चेन्न यतः सर्वा पृथिवी तरभिन्ना न वेति संशयस्य तत्प्रकारकसिषाधयिषायाश्च घटविषयत्वाद्घटत्वेन विशेषदर्शने सिद्धौ वा
तेन रूपेण संशयसिषाधयिषे न भवतः पृथिवीत्वेन तु भवत एवेति॥ श्रीः॥ ई॥ छ॥ ई॥ छ॥ छ श्रीः॥ ई॥ ई॥ ई॥॥

टम
२१९

ननु पृथिवीतरभिन्ना पृथिवीत्वात् घटवदित्यन्वयिनैवेतरभेदसिद्धौ व्यतिरेकिवैयर्थ्यमिति चेन्न अन्वयव्याप्तेरग्रहे व्यतिरेकव्याप्तिस्फूर्तिद-
शायां व्यतिरेकानुमितिजननसंभवेन व्यतिरेकानुमानप्रवृत्तेर्निष्प्रत्यूहत्वात् आचार्यमतमाह केचिदिति व्यतिरेकसहचारेण अन्वयसहचारनि-
रपेक्ष व्यतिरेकसहचारेण अन्वयव्याप्तिरेवेत्येवकारेण व्यतिरेकव्याप्तेर्व्युदासः नन्वेवं व्यतिरेकव्याप्तिज्ञानरूपकारणाभावात्कथं
व्यतिरेकानुमितिरत आह नन्विति व्यतिरेकव्याप्तिज्ञानमित्यस्यानुमितावित्यादिः ॥ नन्वन्वयव्याप्तिज्ञानस्यैव हेतुत्वे कथं व्यतिरेकीति व्यवहा-
र इत्यत आह यत्रेति ननु पृथिवीतरेभ्यो भिद्यते पृथिवीत्वादित्यादौ साध्यस्येतरभेदादेरप्रसिद्धत्वात्कथम्व्यतिरेकसहचारग्रह इत्यत आह सा-

केचित्तु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यते ननु व्यतिरेकव्याप्तिज्ञानमपि कारणम् यत्र व्यतिरेकसहचाराद्व्या-
प्तिग्रहस्तत्र व्यतिरेकीत्युच्यते साध्यप्रसिद्धिस्तु घटादावेव जाता पश्चात्पृथिवीत्वावच्छेदेन साध्यत इति वदन्ति ॥१४२।१४३॥
अर्थापत्तिरिति अर्थापत्तिः प्रमाणान्तरमिति केचिन्मन्यन्ते। तथाहि। यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादव-

अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते। व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥ १४४ ॥ ६ ॥

गतं जीविनो गृहासत्त्वञ्च प्रत्यक्षादवगतं तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्य-
त इति तदप्यनुमानेन गतार्थत्वान्नेष्यते तथाहि यत्र जीवित्वे सति बहिःसत्त्वगृहसत्त्वान्यतरव्याप्यत्वं गृहीतं तत्रान्यतरसि-
द्धौ जायमानायां गृहसत्त्वबाधाद्बहिःसत्त्वमनुमितौ भासते ॥ ६ ॥ ध्यप्रसिद्धिस्त्विति ननु घटादौ साध्ये निर्णीते कथं तत्रेतरभेदा-
नुमितिरत आह पश्चादिति अवच्छेदकावच्छेदेनानुमितौ सामानाधिकरण्येन साध्यसिद्धेरप्रतिबन्धकत्वादिति भावः ॥ अत्र चान्वयव्याप्तिघ-
टकतावत्पदार्थज्ञानादेवान्वयव्याप्तिज्ञानोत्पत्तौ व्यतिरेकसहचारज्ञानस्य तद्धेतुत्वे मानाभावः ॥ न च व्यतिरेकसहचारेणान्यत्र प्रयोजकत्वा-
न्तृतीयार्थः न चैतदनुपपन्नम् अन्वयव्याप्तिज्ञाने प्रतिबन्धकव्यभिचारशङ्कानिरासद्वारा व्यतिरेकसहचारज्ञानस्य तत्र प्रयोजकत्वादिति वा-
च्यम् व्यतिरेकसहचारग्रहेऽप्यधिकरणान्तरे व्यभिचारशङ्कातादवस्थ्यात् तदधिकरणीयव्यभिचारशङ्कानिरासद्वारा न च तस्योपयोगित्वमित्य-

का॰ मु॰
टि॰
२२९

तदधिकरणे साधनाभावग्रहमात्रेणैव तदधिकरणीयव्यभिचारशङ्कानिरासे नेत्यस्वरसो वदतीत्यनेन सूचितः १४२।१४३। केचित्तु मीमांसकास्त
दपि॥ अर्थापत्तेः प्रमाणान्तरत्वमपि दिवा न भुङ्क्ते इत्यादिनामयूरः पर्वते तदस्मिन्नृत्यति नृत्यति चेत्यस्य संग्रहः नन्वेतद्व्याप्त्या मयू
रः पर्वते नृत्यतीति ज्ञानमुत्पद्यते नन्वेतद्व्यतिरेकिणः सम्भवति पर्वतनृत्यस्य साध्यस्याप्रसिद्धौ व्यतिरेकव्याप्तिनिरूपणादिति कथन्नार्थापत्तिः

एवम्पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ पीनत्वस्य भोजनव्याप्यत्वावगमाद्भोजनसिद्धौ दिवाभोजनबाधे रात्रिभोजनं।
सिध्यतीति अभावप्रत्यक्षस्यानुभाविकत्वादनुपलम्भोपि न प्रमाणान्तरम् किञ्चानुपलम्भस्याज्ञातस्य हेतुत्वे ज्ञानाकारणत्वा
त् प्रत्यक्षम् ज्ञातस्य हेतुत्वे तु तत्राप्यनुपलम्भान्तरापेक्षेत्यनवस्था एवञ्चेष्टापि न प्रमाणान्तरन्तस्याः सङ्केतग्राहकशब्द।
स्मारकत्वेन लिप्यादिसमशीलत्वाच्छाब्द एवान्तर्भावात् यत्र च व्याप्त्यादिग्रहस्तत्रानुमितिरेवेति १४४ सुखन्निरूपयति

सुखं हि जगतामेकं काम्यन्धर्मेण जायते। अधर्मजन्यन्दुःखंस्यात्प्रतिकूलं सचेतसाम् १४५ निर्दुःखत्वे सुखे
चेच्छा तज्ज्ञानादेव जायते इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि १४६॥ ॥ सुखमिति काम्यमभिलाषविष।
यः धर्मेणेति धर्मत्वेन सुखत्वेन कार्यकारणभाव इत्यर्थः॥ दुःखन्निरूपयति॥ अधर्मेति अधर्मत्वेन दुःखत्वेन कार्यकार
णभाव इत्यर्थः प्रतिकूलमिति। दुःखत्वज्ञानादेव सर्वेषां स्वाभाविकद्वेषविषय इत्यर्थः १४५ इच्छान्निरूपयति निर्दुःख।
त्व इति इच्छा हि द्विधा। फलविषयिणी उपायविषयिणी च फलन्तु सुखं दुःखाभावश्च तत्र फलेच्छां प्रति फलज्ञानङ्कारणं ॥

प्रमाणान्तरमिति चेन्न मयूरनृत्यस्य पर्वतानधिकरणकस्य पर्वतेतरानधिकरणत्वे सति साधिकरणत्वात्पर्वतत्ववदित्यन्वयव्यतिरेकिणैव पर्वता।
धिकरणकमयूरनृत्यज्ञानसम्भवात्॥ १४४॥ धर्मत्वेनेति इदञ्च प्राचाम्मतेनोक्तम् नवीनमते तु नित्यं विज्ञानमानन्दं ब्रह्मेति श्रुत्या भगव।
तिनित्यसुखसिद्धौ धर्मस्य कार्यतावच्छेदकञ्जन्यसुखत्वम् सुखत्वावान्तरजातिर्वेति बोध्यम् १४५ तत्र तयोर्मध्ये॥ छ॥ छ॥ छ॥ छ॥ छ॥

राम॰
२२०

अत एव फलज्ञानस्य फलेच्छां प्रति हेतुत्वादेव पुरुषार्थः सम्भवतीति ॥ सुखन्दुःखाभावश्च पुरुषार्थः सम्भवतीत्यर्थः । ननु यद्ज्ञानमिष्टादेः स्व
विषयकज्ञानजन्येच्छाविषयत्वमर्थः तथा चोपायेऽतिव्याप्तिस्तस्यापि स्वविषयके इष्टसाधनताज्ञानजन्येच्छाविषयत्वादत आह इतरेच्छेति पूर्व्वार्द्ध
कृतिसाध्यताज्ञानमिति ननु कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण चिकीर्षां प्रति हेतुत्वे मानाभावः तद्धर्मावच्छिन्नविशेष्यकेष्टसाधनताज्ञानस्य तद्ध
र्मप्रकारकेच्छां प्रति हेतुतायाः क्लृप्तत्वात् कृतिसाध्यपाकत्वावच्छिन्नविशेष्यकेष्टसाधनताज्ञानादेव चिकीर्षायाः सम्भवादिति चेन्न यत्र कृ
तिसाध्यपाकत्वेनेष्टसाधनत्वन्न गृहीतमपि तु सुद्धपाकत्वेन कृतिसाध्यत्वं शुद्धपाकत्वेन चेष्टसाधनत्वङ्गृहीतन्तत्रापि पाकगोचरप्रवृत्तेरनुभा
विकत्वात् तदनुरोधेन चिकीर्षाया अप्यावश्यकत्वेन तन्निर्वाहाय कृतिसाध्यताज्ञानस्य स्वातन्त्र्येण हेतुताया आवश्यकत्वात् अथ कृत्यसाध्य

अत एव पुरुषार्थः सम्भवति यज्ज्ञातं सत् स्ववृत्तितया इष्यते स पुरुषार्थ इति तल्लक्षणात् इतरेच्छानधीनेच्छाविषयत्व।
म्फलितोऽर्थः उपायेच्छां प्रतीष्टसाधनताज्ञानङ्कारणम् चिकीर्षेति १४६ कृतिसाध्यत्वप्रकारिका कृतिसाध्यक्रियाविषयिणी

चिकीर्षा कृतिसाध्यत्वप्रकारेच्छा तु या भवेत् । तद्धेतुः कृतिसाध्येष्टसाधनत्वमतिर्भवेत् ॥ १४७ ॥ १ ॥

इच्छा चिकीर्षा पाकं कृत्या साधयामीति तदनुभवात् चिकीर्षां प्रति कृतिसाध्यताज्ञानमिष्टसाधनताज्ञानञ्च कारणम् तद्धेतुरिति

ताज्ञानस्य प्रतिबन्धकत्वादेव तृप्त्यादौ चिकीर्षानुत्पादात् कृतिसाध्यताज्ञानस्य चिकीर्षां प्रति हेतुत्वे मानाभाव इति चेन्न कृतिसाध्यत्वाभावव्याप्यतदव
च्छेदकधर्मज्ञानानां प्रतिबन्धकत्वकल्पनापेक्षया कृतिसाध्यताज्ञानस्य हेतुत्वे लाघवात् इष्टसाधनताज्ञानमिति । अन्यथा निष्फलत्वज्ञानेऽपि चैत्य
वन्दनादौ चिकीर्षापत्तिरिति भावः ॥ अत्रेदमवधेयम् पाकविशेष्यकेष्टसाधनताज्ञानस्य कार्यतावच्छेदकन्न पाकादिगोचरचिकीर्षात्वङ् कृतिसा
ध्यत्वप्रकारकत्वनिवेशे प्रयोजनविरहात् पाको जायतामितीच्छाया असङ्ग्रहापत्तेश्च किन्तु पाकत्वावच्छिन्नमुख्यवि ॥ श्रीः ॥ छ ॥ श्रीः ॥

श्रेष्ठ्यकेच्छातन्मात्रसाध्यं सुखं जायतामितीच्छायां व्यभिचारवारणाय मुख्येति इष्टसाधनतेत्यत्रेच्छास्वरूपसती विशेषणम् तेनेच्छाज्ञानशून्य
कालेऽपि चिकीर्षानिर्वाहः॥ अत एव कृतिसाध्यताज्ञानस्य हेतुत्वादेव १४७ बलवद्द्विष्टेति द्विष्टं द्वेषविषयीभूतं द्वेषश्च दुःखेनाद्रूप्येण ज्ञानात्
त्पोदीनत्साधनताज्ञानात् द्वेषबलवत्त्वज्ञानविशेषः प्रतिबन्धकमिति ननु बलवद्द्वेष विषयसाधनत्वज्ञानस्य प्रतिबन्धकत्वे चैत्रस्या
गम्यागमनजन्यनरके यदा बलवान्द्वेषस्तदा मैत्रस्य तादृशद्वेषशून्यस्यागम्यागमने तादृशनरकसाधनत्वज्ञानवत इच्छाप्रवृत्त्योरनुपपत्तिः।
एवञ्चैत्रस्यैव कालान्तरे तादृशद्वेषसत्त्वेऽपि न च तत्कालीनतत्पुरुषीयेच्छा स्मृति प्रवृत्तिम्प्रति च तत्कालीनतत्पुरुषीयबलवद्द्विष्टजनकत्वज्ञान
स्य प्रतिबन्धकत्वं कल्प्यते यत्पुरुषस्य यदा नरकापि द्वेषस्तत्कालतत्पुरुषान्तर्भावेन तादृशज्ञानप्रतिबन्धकत्वस्याकल्पनात् न च तादृश प्रतिब

अत एव दृष्टा दौ कृतिसाध्यताज्ञानाभावान्न चिकीर्षा॥१४७॥ बलवद्द्विष्टेति बलवद्द्विष्टसाधनताज्ञानं तत्र प्रति

बलवद्द्विष्टहेतुत्वमतिः स्यात्प्रतिबन्धिका॥ तद्धेतुत्वबुद्धेस्तु हेतुत्वं कल्प्यते॥१४८॥ श्री॥

बन्धकं मनोऽवधविषसम्पृक्तान्नभोजनेन चिकीर्षा बलवद्द्वेषः प्रतिबन्धक इत्यन्ये तद्धेतुत्वेति॥ श्री श्री॥ छ॥ श्री॥

न्धकाप्रसिद्ध्या तदभावरूपकारणस्याभावात्प्रवृत्त्यनुपपत्तिरिति वाच्यम् यत्पुरुषस्य यदागम्यागमनजन्यनरके बलवद्द्वेषस्तदा तत्पुरुषस्य तत्रे
च्छानुत्पादादगम्यागमनगोचरतत्पुरुषीयतत्कालीनेच्छाया अप्रसिद्ध्या तत्पुरुषतत्कालान्तर्भावेन तादृशकार्यकारणभावस्याभावेन।
न च तत्पुरुषीयागम्यागमनगोचरेच्छानुत्पादप्रयोजकस्य दुर्निसापत्तेरिति चेन्न तद्धर्मप्रकारकद्वेषविशिष्टस्य तद्धर्मावच्छिन्नजनकत्व
ज्ञानस्य तत्र प्रतिबन्धकत्वकल्पनेनोक्तापत्त्यभावात् तद्धर्मप्रकारकद्वेषानुत्तरतादृशेच्छायां तादृशद्वेषाभाववत्तादृशद्वेषोत्तरतद्गोचरेच्छायां त
द्धर्मावच्छिन्नजनकत्वज्ञानाभावः कारणम् बलवद्द्वेष इति पाकादिगोचरेच्छायां बलवद्द्वेषविषयसाधनत्वज्ञानजन्यः पाकगोचरो द्वेषः
प्रतिबन्धकः पूर्वोक्तप्रतिबन्धकद्वयकल्पनापेक्षया लाघवादिति भावः॥ श्री॥ ॥ श्री॥ ॥ श्री॥ ॥ ॥ छ॥ ॥ छ॥ छ ॥ छ॥ ॥

यत्रचोत्कटसुखोत्कटदुःखजनकत्वमेकस्मिन्कर्मणिगृहीतन्तत्रसत्प्रतिपक्षस्थलइवेच्छाद्वेषयोरनुत्पत्तेस्तन्मतेनतत्रकार्यकालेद्वेषाभाव
स्यसत्वेनेच्छोत्पत्त्यापत्तिः नचयत्रवलवद्द्विष्टसाधनत्वज्ञानेनतत्तीयक्षणेद्वेषोजनितस्तदुत्तरक्षणेइच्छोत्पत्त्यापत्तिस्तवापीतिवाच्यम् तत्रेच्छोत्पाद
स्येष्टत्वात् क्षणविलम्बस्यशपथनिर्णेयत्वादित्यन्येइत्यनेनास्वरसः सूचितः॥ श्री॥ वलवदनिष्टाजनकत्वज्ञानमिति अत्रापितद्धर्मप्रकारकद्वेषोत्तरे
च्छायान्तद्धर्मावच्छिन्नाजनकत्वज्ञानङ्कारणम् तादृशद्वेषानुत्तरेच्छायान्तुतद्धर्मप्रकारकद्वेषाभावः कारणमितिनिष्कर्षोवोध्यः मूलेकस्यचि
न्मतेइत्यनेनास्वरसः सूचितः नचवलवदनिष्टाननुवन्धित्वज्ञानस्यहेतुतावच्छेदकत्वेवलवदनिष्टजनकत्वप्रकारकज्ञाननिरूपिताभावविशेष्यताशालि
त्वादेस्तादृशनिरूप्यनिरूपकभावघटितत्वेनगौरवात्तद्घटितवलवदनिष्टसाधनत्वज्ञानाभावत्वेनैवहेतुत्वंयुक्तम् नचाप्रामाण्यज्ञानानास्कन्दितवल

वलवदनिष्टाजनकत्वज्ञानङ्कारणमित्यर्थः॥ १४८ द्वेषन्निरूपयति। द्विष्टेति। दुःखोपायविषयकंद्वेषंप्रतिवलवद्द्विष्ट

द्विष्टसाधनताबुद्धिर्भवेद्द्वेषस्यकारणम्॥ प्रवृत्तिश्चनिवृत्तिश्चतथाजीवनकारणम्॥ १४९॥ श्री॥

साधनताज्ञानङ्कारणमित्यर्थः॥ वलवदिष्टसाधनताज्ञानम्प्रतिवन्धकन्तेननान्तरीयकदुःखजनकेपाकादौनद्वेषः॥ प्रयत्न।
न्निरूपयति। प्रवृत्तिरि॥ १४९॥

वदनिष्टाननुवन्धित्वज्ञानत्वापेक्षयाऽप्रामाण्यनिश्चयानास्कन्दिततदनुवन्धित्वज्ञानत्वस्यप्रतिवन्धक
तावच्छेदकत्वेगौरवमितिवाच्यम् शुद्धाद्वैवलवदनिष्टसाधनत्वसन्देहेपीच्छाप्रवृत्त्योरुदयाद्वलवदनिष्टाप्रतिवधित्वनिश्चयस्यैवेच्छाप्रतिवन्धकता
यास्तदननुवन्धित्वसंशयस्यापिचकारणतायाश्चवाच्यतयाचविपरीतगौरवादिति नचवलवदनिष्टाननुवन्धिज्ञानस्याप्रवर्त्तकत्वेनद्विषयस्यवि
ध्यर्थत्वाभावान्नकलञ्जम्भक्षयेदित्यादिवाक्यानामप्रामाण्यापत्तिरितिवाच्यम् तज्ज्ञानस्यप्रवृत्तिजनकत्वाभावेपिप्रवृत्तिप्रतिवन्धकवलवद
निष्टसाधनत्वज्ञानविघटकत्वेनप्रवृत्तिप्रयोजकत्वात् प्रवृत्तिप्रयोजकज्ञानविषयस्यविध्यर्थत्वानपायात्॥ श्रीः॥ छ॥ छ॥ छ॥ श्रीः॥ श्री॥

अत्र यद्यपि यत्र प्रथमक्षणे दोषः द्वितीयक्षणे फलेच्छा तृतीयक्षणे फलसाधनताज्ञानं तत्र तृतीयक्षणे द्वेषनाशाद्भवत्येव चतुर्थक्षणे उपायेच्छा यत्र फलेच्छादिक्रमेणैवामुत्पत्तिस्तत्र फलेच्छारूपकारणाभावादेव नोपायेच्छा एवमन्यत्रापि आत्मविशेषगुणानां यौगपद्यानङ्गीकारादिति बलवदनिष्टानुबन्धित्वज्ञानस्य द्वेषस्य वा प्रतिबन्धकत्वमयुक्तम् न युक्तश्च बलवदनिष्टानुबन्धित्वज्ञानस्य हेतुत्व तथापि द्वित्रिक्षणान्तरितेऽपि द्वेषेच्छाप्रवृत्त्योरनुदयस्यानुभविकतया ज्ञानयोरेव न यौगपद्यमित्यभ्युपगमाद्वा पूर्वोक्तप्रतिबन्धकत्वस्य हेतुत्वस्य वावश्यकत्वमिति ध्येयम् तेन द्वेषे वत्त्व विशेषणेन। प्रवृत्तिरित्यादि प्रवृत्तित्वञ्च रागजन्यतावच्छेदकतया सिद्धो जातिविशेषः निवृ

प्रवृत्तिर्निवृत्तिर्जीवनयोनियत्नभेदात्त्रिविधः प्रयत्न इत्यर्थः चिकीर्षेति मधुविषसम्पृक्तान्नभोजनादौ बलवदनिष्टानुबन्धित्वेन चिकीर्षाभावान्न प्रवृत्तिरिति भावः कृतिसाध्यताज्ञानादिवद्बलवदनिष्टाननुबन्धित्वज्ञानमपि स्वतन्त्रान्वय

एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिकीर्तितम्॥ चिकीर्षा कृतिसाध्येष्टसाधनत्वमतिस्तथा १५० उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत्॥

१ व्यतिरेकाभ्यां प्रवृत्तौ कारणमित्यपि वदन्ति कार्यताज्ञानं प्रवर्त्तकमिति गुरवः तथाहि ज्ञानस्य प्रवृत्तौ जननीया याश्चिकीर्षातिरिक्तं नापेक्षितमस्ति सा च कृतिसाध्यताज्ञानसाध्या॥ ६॥

त्तित्वञ्च द्वेषजन्यतावच्छेदकतया सिद्धो जातिविशेषः॥ जीवनयोनियत्नत्वञ्च साहजिकप्राणसञ्चारविषयकयत्नत्वम् ननु बलवदनिष्टानुबन्धित्वज्ञानाभावस्य प्रवृत्त्यहेतुत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरत आह मध्विति चिकीर्षाभावादिति चिकीर्षां प्रति बलवदनिष्टानुबन्धित्वज्ञानाभावस्य हेतुत्वादिति भावः। कृतिसाध्यताज्ञानादिवदिति अन्यथा कृतिसाध्यताज्ञानादेरपि चिकीर्षायामेव हेतुत्वं स्यात्तच्च प्रवृत्तौ व्यापारेण व्यापारिणो नान्यथासिद्धत्वमिति तु प्रकृतेऽपि समानमिति भावः प्रभाकरमतमाह कार्यताज्ञानमिति सा च चिकीर्षा च॥ श्लो॰ ८॥

तद्द्वारा कृतिसाध्यत्वप्रकारकेच्छाद्वारा द्वयोरेवेति एवकारोऽप्यर्थः स्वविशेषणेति स्वप्रवर्त्तमानः पुरुषस्तद्विशेषणज्ञानम्येकामनानित्ये
कालशौचादिति द्वन्नापक्षेतत्सम्बन्धः तस्य प्रतिसन्धानं ज्ञानमित्यर्थः ॥ तस्य कार्यताज्ञानहेतुता लिङ्ग-ज्ञानविधया तथाहि पाको मत्कृति
साध्यः मत्कृतिं विनाऽसत्त्वे सति मदिष्टसाधनत्वादित्यनुमानम् अत्र मदिष्टसाधनत्वमात्रोपादाने दृष्टादौ व्यभिचार इति सत्यन्तम् मदि
ष्टसाधने परकृतपाकादौ व्यभिचारवारणाय मत्कृतिं विनेत्यत्र मत्पदम् श्रमे व्यभिचारवारणाय मदिष्टसाधनत्वादिति मदीयश्रमस्य मच्छ्र
त्वोरिष्टसाधनत्वात्तद्दोषतादवस्थ्यमतस्तत्रापि मदिति ॥ नच स्वेच्छाधीनकृतिसाध्यताज्ञानमेव प्रवर्त्तकमन्यथा नान्तरीयकश्रमे प्रवृत्त्याप-
तेरलञ्चोक्तानुमानात्तत्सिद्धमिति वाच्यम् स्वेच्छाधीनकृतिसाध्यत्वस्यैव साध्यत्वात् एवञ्च हेतावपि मत्कृतिं विनेत्यत्र स्वेच्छाधीनत्वम्

इच्छायाः स्वप्रकारप्रकारकधीसाध्यत्वनियमात् चिकीर्षा हि कृतिसाध्यत्वप्रकारिकेच्छा तत्र कृतिसाध्यत्वप्र
कारकं तत्प्रकारकज्ञानं चिकीर्षायां तद्द्वारा च प्रवृत्तौ हेतुः नन्विष्टसाधनताज्ञानं तत्र हेतुः कृत्यसाध्येऽपि चन्द्रम
ण्डलानयनादौ प्रवृत्त्यापत्तेः कृत्यसाध्यताज्ञानं प्रतिबन्धकमिति चेन्न तदभावापेक्षया कृतिसाध्यत्वज्ञानस्य
लघुत्वात् नच द्वयोरेव हेतुत्वं गौरवात् ननु तन्मतेऽपि मधुविषसम्पृक्तान्नभोजने चैत्यवन्दने च प्रवृत्त्याप
त्तिः कार्यताज्ञानस्य सत्त्वादिति चेन्न स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रवर्त्तकत्वात् ॥ ५ ॥ ॥

त्कृतिविशेषणं देयम् अन्यथाऽन्येच्छाधीनमत्कृतिसाध्ये मदिष्टसाधने नान्तरीयकजलसंयोगादौ व्यभिचारापत्तेः एवं सति स्वेच्छा
धीनमत्कृतिघटितहेतुत्वभावादेव श्रमे व्यभिचारवारणसम्भवाद्धि ग्रोष्यदलप्रयोजनं यद्यपि न सम्भवति तथापि नीलधूमादिवद्धेतुत्वन्नरा
त्वाददोषः ॥ एवमहमिदानीन्तनकृतिसाध्यसन्ध्यावन्दनः द्विजातित्वे सति विहितसन्ध्याकालीनशौचादिमत्त्वादित्यनुमानम् यो हि
जातित्वे सति विहितसन्ध्याकालीनशौचादिमान् स तत्कालीनकृतिसाध्यसन्ध्यावन्दन इति सामान्यतो व्याप्तिरिति नचैवं रीत्येष्टसाधे

॥ नन्वहेतुकानुमानसम्भवेऽपि पक्षे स्वविशेषणवत्ताप्रतिस ॥ ६ ॥ छं

का॰मु॰ टि॰ २२३

न्धानजन्यकार्यताज्ञानं न सम्भवति इष्टसाधनत्वस्य यागनिष्ठत्वेन पुरुषविशेषणत्वाभावात् इच्छायाश्च पुरुषविशेषणत्वेऽपि तस्या लिङ्ग-
त्वासम्भवात् लिङ्घटकत्वेऽपि पक्षे तद्वत्ताज्ञानानिर्वाहकत्वादिति वाच्यम् काम्यसाधनताज्ञानस्यापि पक्षे यागादौ स्वविषयसाधनत्वरू-
पकामनासम्बन्धज्ञानात्मकत्वात् वस्तुतस्तद्वत्ताज्ञानं तत्सम्बन्धज्ञानं तज्ज्ञानमेवेत्यननुपक्षोऽपि तत्रान्तर्भूत इति काम्यसाधनताज्ञानस्यापि
कामनासम्बन्धज्ञानात्मकतया कामनाज्ञानात्मकतया वानुपपत्त्यभावात् ननु स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञानस्य प्रव-
र्तकत्वं इष्टसाधनताज्ञानशून्यकालेऽपि पाके स्वविशेषणकृत्यादिघटितहेतुत्वं तत्राद्युत्र कार्यतानुमितिर्यथा पाकः स्वेच्छाधीनमत्कृतिसा-
ध्यः श्रमादिभिन्नत्वे सति मत्कृतिव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वात् यन्नैवं स्वेच्छाधीनमत्कृतिं विनाऽसत्त्वादिति तत्रापि प्रवृत्त्या-
पत्तिरत आह काम्येहीति कामना यागपाकादिगोचरा कामनात्वं क्वचित्तथैव पाकः तथा च स्वविशेषणेत्यत्र विशिष्यता दृश कामनारूपमेव

कामो हि पाकयागादौ कामना पुंविशेषणम् ततश्च बलवदनिष्टानुबन्धिकाम्यसाधनताज्ञानेन कार्यताज्ञानं
ततश्च प्रवृत्तिः तृप्तस्य भोजनेन प्रवर्त्तते तदानीं कामनायाः पुरुषविशेषणत्वाभावात् ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

तस्य विशेषणं वाच्यमेवं विशेषणवत्त्वमपि स्वविषयसाधनत्वरूपं वाच्यम् तेन न स्वेच्छाधीनेत्यादिद्वितीयहेतुज्ञानजन्यकार्यत्वानुमिति स्था-
ले प्रवृत्त्यापत्तिरिति भावः ननु काम्यसाधनताज्ञानजन्यकार्यताज्ञानस्य प्रवर्तकत्वे मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरित्यत आह तत-
श्च बलवदनिष्टेति ॥ तथा च स्वविशेषणवत्ताप्रतिसन्धाने बलवदनिष्टाननुबन्धित्वविषयकत्वं विशेषणं देयमिति भावः ननु तृप्तस्यापि भो-
जने प्रवृत्त्यापत्तिस्तस्याप्यतीतभोजनकामनाघटितलिङ्गजन्यकार्यताज्ञानसत्त्वादत आह तृप्तश्चेति तदानीमिति कामनायास्तदानीं पुरु-
षविशेषणत्वाभावादित्यर्थः तथा च स्वविशेषणेत्यत्र तदानीन्तनत्वं विशेषणं देयमिति भावः ॥ ननु स्वेच्छाधीनमत्कृति व्यतिरेकप्रयुक्तव्यतिरे-
कप्रतियोगित्वादिलिङ्गज्ञानजन्यकार्यताज्ञानान्तर्भावेन प्रवृत्त्यापत्तिः कृतेरपि स्वविशेषणत्वादत आह ॥ श्रीः ॥ ६ ॥ ॥ ६ ॥ ॥ ७ ॥

नित्येशौचादिकमिति आदिना विहिततत्कर्मकालस्य परिग्रहः न च कालस्य कथं पुरुषविशेषणत्वमिति वाच्यम् स्ववृत्तिजीवनवत्त्वसंबन्धेन तत्
स्य पुरुषविशेषणत्वात् विहितकालजीवित्वादेर्वादिपदेन ग्रहणात् तथा च नित्यगोचरप्रवृत्तिस्थले स्वविशेषणपदेन विशेष्यतत्कालीनशु
चित्वादिरूपविशेषणमेव ग्राह्यमिति न पूर्वोक्तातिप्रसङ्ग इति भावः नैयायिकः शङ्कते नन्विति तदपेक्षया बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाध
नताज्ञानजन्यकृतिसाध्यताज्ञानापेक्षया लाघवेनेति नियमादिघटितजन्यत्वापेक्षया विषयत्वस्य लघुत्वादिति भावः ननु बलवदनिष्टाजनक
त्वज्ञानत्वं हेतुः क्वचिद्बह्वायाससाध्ये बहुतरस्यापि दुःखस्याबलवत्त्वात् क्वचिदल्पस्य दुःखस्य बलवत्त्वात् अनुगतस्याबलवत्त्वस्य बलवत्त्वस्य
दुर्वचत्वादित्यत आह बलवदनिष्टाननुबन्धित्वं चेति इष्टोत्पत्तीति इष्टोत्पत्तिनान्तरीयकं यद्दुःखं तदपेक्षयातिरिक्तं यद्दुःखं तदजनकत्वमि

नित्ये च शौचादिकम्पुरुषविशेषणं तेन शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात्तत्र प्रवृत्तिः ॥ ननु तदपेक्षया ला
घवेन बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानत्वेनैव हेतुत्वमस्तु बलवदनिष्टाननुबन्धित्वञ्चे
ष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं बलवद्द्वेषविषयदुःखाजनकत्वं वेति चेन्न इष्टसाधनत्वकृ
तिसाध्यत्वयोर्युगपज्ज्ञातुमशक्यत्वात्साध्यत्वसाधनत्वयोर्विरोधित्वात् ॥ श्रीः ॥ ॥ ६ ॥ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

त्यर्थः ॥ एतेन मधुविषसम्पृक्तान्नभोजने प्रवृत्त्यापत्तिरपास्ता इष्टोत्पत्तिनान्तरीयकदुःखादिरिक्तस्य मरणदुःखस्य तेन जन
नात् अत्र केचित् । सुखमात्रजनके कर्मणीष्टोत्पत्तिनान्तरीयकदुःखमप्रसिद्धमिति तत्र प्रवृत्त्यभावप्रसङ्ग इति तदयुक्तम् कष्टं
दुःखमेतिन्यायेन सुखजनके कर्मणि दुःखजनकत्वनियमेनाप्रसिद्ध्यभावात् मिश्रास्त्विष्टोत्पत्त्यनान्तरीयकदुःखाजनकत्वमुक्तस्यार्थ
इति नाप्रसिद्धिरित्याहुः ॥ नन्वेवं सति नरकसाधनत्वेन प्रमिते परदारादिगमनादौ रागोत्कट्यान्न प्रवर्तेत इष्टोत्पत्त्यनान्तरीयकन
रकदुःखजनकत्वेन तस्य निश्चयादित्यत आह बलवद्द्वेषेति द्वेषे चाबलवत्त्वञ्ज्ञातिविशेषः अत एव रागान्धस्य परदारगमनादिज
॥ ६ ॥ ६ ॥ न्यदुःखेन तादृशो द्वेषस्तदा तद्धेतावपि प्रवृत्तिः ॥

साध्यत्वसाधनत्वयोर्विरोधमुपपादयति असिद्धस्य हीति आद्यक्षणवृत्तित्वविशिष्टस्य पाकादेरित्यर्थः। सिद्धस्य अनाद्यक्षणविशिष्टस्य कृत्य।
व्यवहितोत्तरक्षणसम्बन्धित्वघटितस्य कृतिसाध्यत्वस्य पाकोत्पत्तिक्षण एव पाकवृत्तित्वात् कालान्तरभाव्योदनादिफलसाधनत्वस्योदनाव्यव।
हितपूर्वक्षणसम्बन्धित्वघटितस्य चोत्पत्तिक्षणे पाकावृत्तित्वात् तयोरेकक्षणावच्छेदेनैकत्रावृत्तित्वरूपविरोधादिति भावः। यद्यपि कालान्तरभाव्यो
दनाव्यवहितपूर्वक्षणवृत्तितावच्छेदकधर्मवत्त्वरूपमोदनसाधनत्वमाद्यक्षणवृत्तित्वविशिष्टेऽपि पाके सम्भवतीति कथं विरोधस्तथापि स्वरू
पयोग्यमिदन्न फललोपधायकमिति ज्ञानान्न प्रवृत्त्यनुदयेन फलोपधायकत्वरूपेष्टसाधनताज्ञानस्यैव संशयसाधारणस्य प्रवृत्तिकारणत्व
म्वाच्यम् पूर्वोक्तं फलोपधायकत्वञ्चाद्यक्षणविशिष्टे यागादौ न सम्भवतीति भावः॥ साध्यत्वसाधनत्वयोर्विरोधमुत्पाद्य तयोरेकज्ञानविष
यत्वन्न सम्भवतीत्याह॥ न चैकमेकं नैकदेति अव्याप्यवृत्तिपदार्थस्य स्वस्वाभावावच्छेदकानवगाहिज्ञानन्न सम्भवति मूले वृक्षः संयोगीत्येव प्रती

असिद्धस्य हि साध्यात्वं सिद्धस्य च साधनत्वम् न चैकमेकं नैकदा सिद्धमसिद्धञ्चेति ज्ञायते तस्मात्कालभेदादुभ
यज्ञायत इति मैवम् लाघवेन बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताज्ञानस्य तत्र हेतुत्वात् न च
साध्यत्वसाधनत्वयोर्विरोधः॥ ६ ॥ ६ ॥

तेः॥ तथा च साध्यत्वसाधनत्वयोरपि स्वावच्छेदकासिद्धत्वसिद्धत्वविषयकमसिद्धः पाकः कृतिसाध्यः सिद्धश्च पाक इष्टसाधनमिति ज्ञानं सम्भ
हाले ~ वनरूपं वाच्यम् तच्च न सम्भवति सिद्धत्वासिद्धत्वज्ञानयोः परस्परं विरोधित्वादित्यभिमानः॥ तस्मात्कालभेदादिति न चेदानीमसिद्धः पा
कः कृतिसाध्यः अग्रे च सिद्धः पाक इष्टसाधनमिति ज्ञानादेव प्रवृत्तिरस्त्विति वाच्यम् इदानीन्तनाग्रेतनकालयोरननुगमात् प्राणित्वस्यापि पुरुषविशे
षणत्वेनाहमिदानीन्तनकृतिसाध्यविषभक्षणवान् प्राणित्वादित्याद्यनुमितिसम्भवाद्विषभक्षणसाधारणं स्वविशेषणवत्ताप्रतिसन्धानजन्यकार्यताज्ञान
मिति बलवदनिष्टाननुबन्धीष्टसाधनताशौचाद्यन्यतरलिङ्गप्रतिसन्धानजन्यकार्यताज्ञानम्प्रवर्तकं वाच्यम्। तदपेक्षया बलवदनिष्टाननुबन्धीष्टसाधनताविष

येनाज्ञानमनिलष्विनितरेतरकाम्यनित्यसाधारणकारणत्वेन कल्प्यत इत्यभिप्रायेण प्राभाकरमतन्दूषयति मैवमिति ॥ ६ ॥ साध्यत्वसाधनत्वयो।
र्विरोधन्दूषयति नचेति ॥ नहीत्यर्थः ॥ यदाकदाचिदिति ॥ यत्किञ्चित्कालीनस्य साध्यत्वस्य यत्किञ्चित्कालीनेन साधनत्वेन विरोधाभावादित्य
र्थः ॥ तथाचैककालीनकृतिसाध्यत्वेष्टसाधनत्वयोर्विरोधेपि नस्तितस्तयाज्ञानस्यास्माभिः कारणत्वानङ्गीकारात्किन्तु निर्विशेषितयोःसामा
न्यतः कृतिसाध्यत्वेष्टसाधनत्वयोर्ज्ञानस्यैव हेतुत्वाङ्गीकारादिति भावः ॥ तादृशञ्च ज्ञानसम्भवतीत्याहुः एकदेति ॥ इदन्त्व ज्ञानान्वयिज्ञा।
नात् ज्ञानसम्भवात् मूलाद्यनवगाहिनोपि तत्स्वः सयोगीति ज्ञानस्यानुभविकतया व्याप्यत्वे ज्ञानंस्वावच्छेदकविषयकमेवेति नियमे

यदाकदाचित्साध्यत्वसाधनत्वयोरविरोधादेकसाध्यत्वसाधनत्वयोश्च ज्ञानात् नव्यास्तु ममेदं कृतिसाध्यमिति
ज्ञानान्न प्रवर्त्तकमनागतेतस्य ज्ञातुमशक्यत्वात् ॥ किन्तु यादृशपुंसः कृतिसाध्यं यदृष्टं तादृशत्वंस्वस्य प्रतिसन्धा
यतत्र प्रवर्त्तते तेनौदनकामस्य तत्साधनता ज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यः तादृशश्चाहमिति
।प्रतिसन्धाय पाके प्रवर्त्तत इत्याहुः ॥ नन्वास्वकल्पि तलिप्यादिप्रवृत्तौ यौवने कामोद्रेकादिना सम्भोगादौ
च तदभावात् इदन्नुबोध्यम् इदानीन्तनेष्टसाधनत्वादिज्ञानम्प्रवर्त्तकम् तेन भावियौवराज्ये बालस्य न
॥ प्रवृत्तिः इदानीं कृतिसाध्यत्वाज्ञानात् ॥ श्री ६ ॥ ६ ॥

मानाभावान्न पूर्वोक्तदोष इति ध्येयम् प्राभाकरानुयायिनवीनमतमाह नव्यास्त्विति ज्ञातुमशक्यत्वादिति सामान्यलक्षणप्रत्यासत्त्यनङ्गी
कारे प्रत्यक्षस्यपक्षज्ञानाभावेनानुमितेश्चासम्भवादिति भावः ॥ तदभावात् ॥ यादृशस्य पुंसः कृतिसाध्यं यदृष्टन्तादृशत्वज्ञानाभावात् ॥
नन्विष्टसाधनताज्ञानस्य प्रवृत्तिजनकत्वे भावियौवराज्ये प्रवृत्त्यापत्तिरत आह इदन्नुबोध्यमिति इष्टसाधनत्वादीत्यत्रादिपदोपग्र
हीतस्येदानीन्तनकृतिसाध्यत्वस्य घटकतनाविदानीन्तनत्वविशेषणस्य प्रयोजनमाह तेन भावीति ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥ ६ ॥

इष्टसाधनतत्वघटकेच्छायास्तद्विशेषणस्य प्रयोजनमाह एवन्तु प्रवृत्तिरिति बलवदनिष्टेत्यत्र बलवत्त्वेन तद्विशेषणप्रयोजनमाह प्रवर्त्तेतैवेति प्रवृ
त्तौ प्रवृत्तेः पूर्वं नरकसाधनत्वज्ञानादिति नरकरूपबलवदनिष्टसाधनत्वज्ञानादित्यर्थः उत्कटरागादिनेति अगम्यागमनादिसुखउत्कटरागा
दिनेत्यर्थः॥ नरकेति बलवदनिष्टेत्यर्थः॥ तिरोधानात् अनुत्पादनात् तादृशसुखे उत्कटरागसत्वेऽगम्यागमनजन्यनरके बलवद्द्वेषानुदया
दिति भावः॥ प्रवृत्तिरूपेति कृतिसाध्यताज्ञानमित्यत्र प्रवृत्तित्वेन कृतेः प्रवेश इत्यर्थः॥ स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्वे तु द्विमणि
कृन्मतेपि स्वेच्छाधीनत्वं कृतिविशेषणं प्रवृत्तिरूपकृतिलाभायैवेति भावः॥ इत्थञ्च नद्यापारीभूतेच्छापि प्रवृत्तिसाध्यत्वप्रकारिकाबोध्या ज्ञा
नेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावादिति तेन प्रवृत्तिप्रवेशेन प्राणपञ्चकसञ्चारेन प्रवृत्तिरितिनच प्राणानामतीन्द्रियत्वयोपादा।

एवन्तु प्रत्यक्षभोजनेन प्रवर्त्तेते॥ तदानीमिष्टसाधनत्वाऽज्ञानात् प्रवर्त्तेतैव रोषदूषितचित्तो विषादिभक्षणे तदानी
मवलवदनिष्टाननुबन्धित्वज्ञानात् नचास्तिकस्यागम्यागमनशत्रुवधादिप्रवृत्तौ कथं बलवदनिष्टाननुबन्धित्व
बुद्धिर्नरकसाधनत्वज्ञानादिति वाच्यम् उत्कटरागादिना नारकसाधनताधीतिरोधानात् तृष्णादौ तु कृतिसाध्य
ताज्ञानाभावान्नचिकीर्षा प्रवृत्तौ किन्त्विष्टसाधनताज्ञानादिच्छामात्रम् कृतिश्च प्रवृत्तिरूपा बोध्या तेन जीवनयो
नियत्नसाध्ये प्राणपञ्चकसंचारेन प्रवृत्तिः॥ ८॥ ९॥

१ नप्रत्यक्षाभावादेव नप्राणोपादानकसञ्चारसाध्यकप्रवृत्त्यापत्ति
रितिवाच्यम् प्राणवहननाड्युपादानकप्राणसञ्चारसाध्यकप्रवृत्त्यापत्तिवारणायैव प्रवृत्तिसाध्यताज्ञानहेतुत्वाङ्गीकारात् यद्यपि प्रा
णसञ्चारादित्रिविशेष्यता सम्बन्धेन कृतिसाध्यताज्ञानहेतुत्वाङ्गीकारादेव तथा प्रवृत्तिवारणं सम्भवति तथापि घटादौ जीवनयोनियत्नसा
ध्यत्वभ्रमात् प्रवृत्त्यापत्तिवारणाय प्रवृत्तिसाध्यत्वज्ञानहेतुत्वमावश्यकमिति ध्येयम् एतेन प्राणसञ्चारे प्रवृत्तिवारणाय प्रवृत्तिसाध्यताज्ञानस्य
हेतुत्वेपि प्रवृत्तिसाध्यत्वभ्रमात् प्राणसञ्चारे प्रवृत्त्यापत्तिर्दुर्वारेत्यपास्तम् नच प्रवृत्तिसाध्यताज्ञानस्य हेतुत्वेपि भोजननान्तरीयके श्रमे साध्यत्वया
प्रवृत्त्यापत्तिर्दुर्वारेति वाच्यम् तादृशश्रमे चिकीर्षाविरहादेव प्रवृत्त्यनुत्पत्तेः तत्र चिकीर्षाविरहश्च श्रमस्य दुःखरूपतया दुःखत्वज्ञानस्येच्छा॥

प्रतिबन्धकत्वं तदिच्छासामान्यसामग्रीविरहादेव एतेननान्तरीयकश्रमे प्रवृत्त्यापत्तिवारणाय स्वेच्छाधीनकृतिसाध्यताज्ञानस्य हेतुत्वम्वा
च्यमिति मणिकृन्मतमपास्तम् नच सुखे प्रवृत्तिसाध्यताज्ञानेच्छयोः सत्वात्तत्र साध्यताख्यविषयतासम्बन्धेन प्रवृत्त्यापत्तिरिति वाच्य
म् साध्यतया प्रवृत्तिम्प्रति फलत्वेनज्ञानस्य प्रतिबन्धकत्वात् वस्तुतस्तु तत्तद्धर्मान्यवृत्तिविषयतासंबन्धेन ज्ञानम्प्रति तत्तद्धर्मभेदस्य हेतुता।
यास्तत्र तत्र व्यवस्थापितत्वात् तत्र च कार्यतावच्छेदकोटौ ज्ञानत्वस्थाने गुणत्वमेव निवेशनीयम् एवञ्च सुखत्वान्यवृत्तिविषयतासम्ब
न्धेन गुणत्वस्य कृतिसाध्यता ज्ञानजन्यतावच्छेदकीभूतं यत्साध्यताख्यविषयतासम्बन्धेन प्रवृत्तित्वन्तद्व्यापकतया तदवच्छिन्न।
जनकसुखत्वभेदस्य सुखत्वेऽभावादेव न तत्र साध्यतया प्रवृत्त्यापत्तिः व्याप्यधर्मावच्छिन्नजनकसामग्र्या फलजनने व्यापकधर्माव
च्छिन्नजनकसामग्र्या अपेक्षितत्वात् अनयैव च रीत्या प्राणसञ्चारत्वे श्रमत्वे च साध्यताख्यविषयतावच्छेदकतासम्बन्धेन प्रवृत्तिवार
णम्बोध्यम् एतदेव हृदि निधाय प्राणसञ्चारस्य प्रवृत्त्ययोग्यत्वादेव न तत्र प्रवृत्तिरिति मिश्रैरभिहितमिति दिक्॥ छ ॥ ॥ इत्यञ्चेति

॥ इत्यञ्च प्रवर्त्तकत्वानुरोधाद्विधेरपीष्टसाधनत्वादिकमर्थः॥ श्रीः॥

प्रवृत्तिम्प्रतीष्टसाधनत्वादिधियो हेतुत्वे चेत्यर्थः॥ इष्टसाधनत्वादीत्यादिना बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वयोः परिग्रहः॥ अत्र च।
निष्फले प्रवृत्त्यभावादिष्टसाधनत्वस्य इष्टसाधनेऽपि मधुविषसम्पृक्तान्नभोजनेऽप्रवृत्तेर्बलवदनिष्टाननुबन्धित्वस्य कृत्यसाध्ये सुमेरुशृ
ङ्गाहरणादावप्रवृत्तेः कृतिसाध्यत्वस्य च ज्ञानं हेतुः नच विधिनदितीष्टसाधनत्वादिकं विध्यर्थ इति भावः॥ ननु भाविवियौवराज्यादौ प्रवृ
त्तेर्वारणायेदानीन्तनकृतिसाध्यताज्ञानादेः प्रवर्त्तकत्वम्वाच्यम् तच्च न विधिवाक्यात् ततः शक्यकृतिसाध्यत्वेष्टसाधनत्वप्रकारकज्ञान
स्यैवोत्पत्तेरिति कथम्प्रवर्त्तकज्ञानं विधितदिति अत्र वदन्ति न विधिः साक्षात्प्रवर्त्तकज्ञानमुत्पादयति किन्तु विधिवाक्यादिष्टसाधनत्वे
कृतिसाध्यत्वे चावगते किमिष्टमित्याकाङ्क्षायां स्वर्गकामादिपदसमभिव्याहारात्स्वर्गसाधनमिति ज्ञानमानुमानिकम्मानसम्वोत्पद्यते
।अन्यथाविशेषरूपेण फलज्ञानाभावात्प्रवृत्त्यनुपपत्तेः॥ एवमिदानीन्तनत्वान्तर्भावेन कृतिसाध्यत्वादिज्ञानमनुमानादि ॥ ६ ॥ ६॥

का॰मु॰
हि॰
२२६

ति अत एवोक्तम्मणिकृतापि एवंविधिजन्यज्ञानजन्यज्ञानम्प्रवर्त्तकमिति॥ ७॥ ॥ अत्र भट्टपादाः लोके प्रवृत्तिर्हि धास्वेच्छाधीनापरप्रेरणाज न्या च तत्राद्यायाम्प्रवर्त्तना या अनुपयोगेपि द्वितीयप्रवृत्तौ सा प्रयोजिका आचार्यप्रेरणेदं करोमीति व्यवहारात् प्रवर्त्तनाच प्रवर्त्तयितुःप्रवृ त्त्यनुकूलव्यापारविशेषः॥ स च चेतनस्याभिप्राय एव अचेतनस्य तु वेदस्याभिधानामकः कश्चिच्छब्दसमवेतः। तथा चाचार्याभिप्रायज्ञाना द्यथा शिष्यः प्रवर्त्तते एवमभिधाज्ञानाद्धि विध्युत्ते प्रवृत्तिरिति सैव लिङर्थः सैव च शाब्दभावना लिङ्त्वांशेनोच्यते अर्थभावनात्वाख्यातत्वांशेन त दुक्तम् अभिधांभावनामाहुरन्यामेव लिङादयः॥ अर्थात्मभावनात्वन्या सर्वाख्यातस्य गोचर इति अभिधाशब्दः तन्निष्ठा भावना ऽभिधाभाव ना ऽर्थो यागादिरात्मा वा अर्थात्मकत्वञ्चार्थगोचरत्वमर्थाश्रितत्वं वा तथा च यागादिगोचरात्माश्रिता प्रवृत्तिरर्थभावना अत्र च शब्दभावनाया अर्थभावनैव भाव्या अर्थभावनायाश्च फलं स्वर्गादीति बोध्यं तदुक्तम् लिङोऽभिधा सैव च शाब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः सम्बन्धबो

इत्यञ्च विश्वजिता यजेतेत्यादौ यत्र फलन्न श्रूयते तत्रापि स्वर्गः फलङ्कल्प्यते नन्वहरहः सन्ध्यामुपा सीतेत्यादौ विशिष्टानुत्पत्तेः प्रवृत्तिः कथम्॥

१॥ धः करणन्तदीयमप्ररोचना चाङ्गन्तयोपयुज्यते इति अस्यार्थः लिङोऽभि भिधा वाच्यं तस्याः किम्भाव्यमित्याकाङ्क्षायामुक्तम्भाव्या च तस्या इति केन भाव्या इत्याकाङ्क्षायां सम्बन्धेति सम्बन्धबोधः लिङादिपा दशक्तिज्ञानम् तत्रालस्येन निवर्त्तमानम्पुरुषम्प्रति रूत्तेजयतीति सा सहकारिणीत्याह प्ररोचनेतीति वदन्ति॰ तन्न॰ लोके स्वेच्छाधीनप्र वृत्तौ इष्टसाधनताज्ञानस्य हेतुत्वेन क्लृप्तत्वादन्यत्रापि प्रवृत्तौ तदेव हेतुरस्तु किमतिरिक्तप्रवर्त्तनाज्ञानस्यातिरिक्तहेतुत्वेन अत एव वेदेपि न प्रवर्त्तनाज्ञानं हेतुः॥ शब्दशक्तिभिन्नायामभिधायाम्मानाभावाच्च अत एव मण्डनमिश्राः पुंसान्नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्त्तकः प्रवृत्ति हेतुन्धर्मञ्च प्रवदन्ति प्रवर्त्तनामित्यादिना प्रवृत्त्यनुकूलत्वेनेष्टसाधनत्वमेव प्रवर्त्तनेत्युक्तवन्तः॥ ७ ॥ नन्वेवं विश्वजिता यजेतेत्यादौ फ लाश्रवणेनेष्टसाधनताज्ञानाभावात्प्रवृत्तिर्न स्यादत आह इत्यञ्चेति इष्टसाधनत्वादेर्विध्यर्थत्वे चेत्यर्थः॥ ननु नित्ये सन्ध्योपासनादौ फ लाभावान्नेष्टसाधनत्वज्ञानम्प्रवर्त्तकन्त्वानद्विषयो विध्यर्थ इत्यभिप्रायेण शङ्कते नन्विति॥ श्रीः॥ श्रीः॥ ७॥ श्रीः॥ १॥ ७॥ श्री॥

राम
२२६

नचार्थवादिकमिति सन्ध्यामुपासते ये तु सततं शंसितव्रताः॥ विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनमित्यर्थः नित्यत्वहान्यापत्तेरिति नित्यत्वका
म्यत्वयोर्विरोधे दूषणाभिमानः। ननु तयोर्विरोधित्वे मानाभावः अहरहः सन्ध्यामुपासीतेत्यादिश्रुतिसन्ध्यामुपासते इत्यर्थवादयोरेकवाक्यतया
बलेन तत्कालजीविफलकामस्य सम्वलिताधिकारः कल्प्यत इत्यत आह कामनाभाव इति अकरणापत्तेरिति अकरणे प्रत्यवायानुत्पत्त्यापत्ते
रित्यर्थः॥ कामनारूपाधिकाराभावात् नधिकृताकरणस्य प्रत्यवायजनकत्वाभावादिति भावः॥ ननु तथापि नित्यस्थलीयफलश्रुतेर्वैयर्थ्य
मित्याशङ्क्यार्थवादतया स्तुतिमात्रे तात्पर्यं कल्प्यत इत्याह इत्यस्त्वेति कल्पनादिति इदमुपलक्षणम् अर्थवादोपस्थितकामनाया अधिका
रत्वेपि अकुर्वन्विहितङ्कर्मेत्यादिना शौचे सति विहिताननुष्ठानस्य प्रत्यवायजनकत्वबोधनात् कामनासम्वलितस्य शुचित्वादेर्नाधिकारत्वं

नचार्थवादिकम्ब्रह्मलोकादि प्रत्यवायाभावो वा फलमिति वाच्यम् तथा सति काम्यत्वे नित्यत्वहान्यापत्तेः॥ कामना
भावे चाकरणापत्तेः॥ इत्यस्त्वयत्र फलश्रुतिस्तत्रार्थवादमात्रमिति चेन्न ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्व।
योरिव नित्यत्वकाम्यत्वयोरप्यविरोधात् नच कामनाभावेऽकरणतापत्तिः त्रिकालस्तवपाठादाविव कामनास
द्भावस्यैव कल्पनात् ननु वेदबोधितकार्यताज्ञानात्प्रवृत्तिरिति सम्भवति स्वेष्टसाधनत्वमज्ञायता दृशकार्यता
ज्ञानसहस्रेणापि रपि प्रवृत्तेरसम्भवात्॥

(( किन्तु नित्यस्थले फलकामनाशुचित्वाद्योरधिकारयोः सम्वलनन्तथा च काम
नाविरहेपि शुचित्वादिरूपाधिकारसत्त्वात्तदा सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वमेव कामनाया अधिकारत्वेपि तदधिकारवतः शौचादिवि
रहिणः सन्ध्याद्यकरणस्य प्रत्यवायजनकत्वन्न कल्प्यते शुचित्वतत्कालजीवितत्वरूपाधिकारैकदेशवतोप्यकरणे प्रत्यवायजनकत्वङ्कल्प्य
ते तेन सम्वलिताधिकारत्वेपि सति विरहाच्चेत्यपि द्रष्टव्यम्॥ एतेन तत्र नियमेन फलकामनासत्त्वे मानाभावेपि न क्षतिरिति सूचितम् ननु नित्य
गोचरप्रवृत्ता विष्टसाधनताज्ञानङ्कारणमेव नेत्यनेनैवोपपत्तौ किमर्थं नित्यस्यापि काम्यत्वङ्कल्पनीयमत आह नन्विति स्वेष्टसाधनत्वमिति अत्र

का॰ शु॰ टि॰ २२७

व्यतिरेकाभ्यामप्रवृत्तित्वावच्छिन्नम्प्रतीष्टसाधनताज्ञानस्य हेतुत्वादिति भावः। अत एव कुसुमाञ्जलौ सन्ध्योपासनमफलमपि क्रियते वेदबो
धितत्वादित्याशङ्क्य गुरुमतमेतत्र गुरुगुरोर्मतमित्यभिधायैवोपेक्षितमाचार्यैः॥ ६॥ यच्च पण्डापूर्वं स्वतः प्रयोजनन्नित्यस्य कर्मण इति
प्राभाकरमतन्तद्दूषयति यदपीति कामनाभावे पण्डापूर्वात्मकफलकमनाभावे रात्रिसत्रन्यायादिति यथाहि रात्रिसत्रशब्दवाच्यानां
ज्योतिर्गौरित्यादिवाक्योक्तानान्तु कर्मणाम्फलजिज्ञासायामश्रुतत्वात्स्वर्गादिकल्पने गौरवाद्विश्वजिन्न्यायापवादेन प्रतितिष्ठन्ती ह वा य एता रा
त्रीरुपयन्तीत्यर्थवादश्रुतौ प्रतिष्ठैव फलमिति सिद्धान्तितन्तथात्राप्यर्थवादिकम्ब्रह्मलोक एवं फलं लाघवादित्यर्थः अन्यथा फलाभावे

यद्यपि पण्डापूर्वम्फलमितितदपि न कामनाभावेऽकरणतापत्तेस्तौल्यात्कामनाकल्पनेनार्थवादिकम्फलमेव
रात्रिसत्रन्यायात्कल्प्यताम् अन्यथा प्रवृत्त्यनुपपत्तेः॥ तेनानुत्पत्तिम्प्रत्यवायस्यान्येमन्यन्ते॥ एवं सन्ध्यामुपा
सते ये तु सततं शंसितव्रताः विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् एवं दद्यादहरहः श्राद्धम्पितृभ्यः
प्रीतिमावहन् इति प्रीत्यात्मकमेव फलमस्तु न च पितृप्रीतिः कथम्फलम्व्यधिकरणत्वादिति वाच्यम् गया
श्राद्धादाविवोद्देश्यत्वसम्बन्धेनैव फलजनकत्वस्य कल्पनात् अत एवोक्तं शास्त्रदर्शितम्फलमनुष्ठा
नकर्तरीत्युत्सर्ग इति पितॄणाम्मुक्तत्वे तु स्वस्य स्वर्गादि फलं यावत् नित्यनैमित्तिकानुष्ठानस्य सामान्यतः स्वर्ग
जनकत्वात्पण्डापूर्वार्थम्प्रवृत्तिश्च न सम्भवति न हि तत्सुखन्दुःखाभाववत्स्वतः पुरुषार्थः न वा तत्साधनं ६॥

नेन आर्थवादिकफलकल्पनेन लाघवेन तत्र तत्रार्थवादिकम्फलन्दर्शयति अनुत्पत्तिमित्यादिना अत एव पितृप्रीतेः श्राद्धफलत्वादेव
उत्सर्ग इतीति श्राद्धादिफलस्य कर्तृमात्रगतत्वे तु व्यभिचाराभावान्नियम एव स्यादिति भावः। पण्डापूर्वस्वीकारेपि तत्साधनताज्ञानस्य प्र
वर्त्तकत्वन्न सम्भवतीत्याह पण्डापूर्वार्थमिति न वा तत्साधनमिति तथा चेच्छाविषयत्वाभावेन फलत्वाभावान्न तत्साधनताज्ञानम्प्रवर्त्तकमिति

श्रीः राम॰ २२७

ननु त्वन्मतेऽपि प्रत्यवायानुत्पत्तेः कथं सफलत्वं स्वतः पुरुषार्थत्वाभावात् न वा दुःखानुत्पत्तिरूपपुरुषार्थसाधनत्वेन तत्त्वे इच्छाविषयत्वं दुःखा
नुत्पत्तेः प्रागभावरूपायास्तज्जन्यत्वादित्याशङ्क्य परिहरति प्रत्यवायेत्यादिना अनुत्पत्ताविन्युद्देश्यत्वस प्रश्नस्यार्थः॥ कथमप्रवृत्तिरिति
पूर्वोक्तरीत्या प्रत्यवायानुत्पत्तेः फलत्वाभावेन तत्साधनताज्ञानस्य प्रवृत्त्यहेतुत्वात्सन्ध्यावन्दनादौ प्रवृत्तिरित्यर्थः प्रत्यवायाभावः प्रत्यवाय।
प्रागभावः॥ तदभावे सन्ध्यावन्दनादिनित्याभावे तदभावः प्रत्यवायाभावस्याभावः। तदभावे प्रत्यवायाभावस्याभावे तदभावः दुःखप्राग।
भावाभावो दुःखरूपः॥ योगक्षेमसाधारणेति योगोऽप्राप्तस्य प्राप्तिः क्षेमः सिद्धस्य संरक्षणम् प्रवृत्तिमतीष्टसाधनताज्ञानस्य हेतुतायां साधनता
याः क्षेमसाधारण्या एव प्रविष्टत्वादिति भावः॥ प्रागभावस्य प्रतियोगिविकल्पग्रासेन फलत्वासंभवात्प्रत्यवायानुत्पत्त्याभाव एव नित्यस्य फलं।

प्रत्यवायानुत्पत्तौ कथं प्रवृत्तिरिति चेत् इत्थम् यथा हि नित्ये कृते प्रत्यवायाभावस्तिष्ठति तदभावे तदभावः। एवं प्रत्य
वायाभावसत्त्वे दुःखप्रागभावसत्त्वं तदभावे तदभाव इति योगक्षेमसाधारणकारणतया दुःखप्रागभावस्यापि सु
वचत्वात् एवमेव प्रायश्चित्तस्यापि दुःखप्रागभावहेतुत्वमिति ननु न कलञ्जं भक्षयेदित्यत्र विध्यर्थे कथं नञर्थान्व
यः इष्टसाधनत्वाभावस्य कृतिसाध्यत्वाभावस्य च बोधयितुमशक्यत्वादिति चेन्न तत्र बाधादिष्टसाधनत्वकृतिसाध्य।
त्वञ्च न विध्यर्थः किन्तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते ॥ १॥ २॥ ७॥ ॥ ६॥ ७॥

स्वरूपसम्बन्धविशेषात्मकक्षेमसाधारणजन्यतया अत्यन्ताभावे सत्त्वादिति तु नव्याः॥ एवमेव योगक्षेमसाधारणमेवान ननु न कलञ्जमित्यत्र कल।
ञ्जभक्षणाभाव इष्टसाधनमित्यन्वयबोधाभ्युपगमे बाधकाभावादित्यत आह विध्यर्थे कथं नञर्थेति विध्यर्थनञर्थयोः कथमन्वयः विध्यर्थेष्टसा
धनत्वाद्यन्वितनञर्थस्याभावस्य कलञ्जभक्षणे कथमन्वय इत्यर्थः अशक्यत्वादिति कलञ्जभक्षणे तस्य बाधादिति भावः। बलवदनिष्टाननुब
न्धित्वमात्रमिति विधेः कृतिसाध्यत्वादिषु त्रिषु शक्तिस्वीकारेण क्वचित्कस्यचित्क्वचित्कस्यचिद्विध्यर्थस्य बोधस्वीकारादिति भावः॥ प्रवृत्तिं प्रति
कृतिसाध्यत्वविशिष्टबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वज्ञानत्वेनैकस्यैव हेतुत्वं लाघवात्तु कृतिसाध्य॥ १॥ श्री १॥ ॥ श्री २॥ ७॥

त्वादिप्रत्येकविषयकज्ञानत्वेन गौरवादतो विधेरपि विशिष्टमेव शक्यत्वाच्यम् एवञ्च निषेधस्थले विशिष्टाभावो विधिसमभिव्याहृतनञा
बोध्यत इत्यभिप्रायवानाह अथवेति विशेषणाभावे विश्राम्यतीति एवञ्चेष्टसाधनत्वादिमति कलञ्जभक्षणादौ विशिष्टाभावो बोध्यमानो बल
वदनिष्टाननुबन्धित्वाभावे पर्यवस्यतीति भावः। विशिष्टस्य विध्यर्थत्वे श्येने बलवदनिष्टाननुबन्धित्वरूपविशेषणबाधात्कथं विशिष्टस्य वि
ध्यर्थस्य बोध इत्याशङ्कते ननु श्येनेनेति श्येनेनेति कर्मनामधेयमभिचरन्वैरीमारणं कामयन् कथमिति श्येनेन तस्य बाधितत्वादि
ति भावः अर्थः विधिजन्यबोधविषयः। वैधत्वान्न निषेध इतीति यज्ञीयपश्वालम्भानुरोधेन मा हिंस्यादिति निषेधस्य वैधहिंसेतरहिंसापर
त्वादिति भावः॥ अभिचार इति तथा चाभिचारमहीनस्त्रिभिः कृच्छ्रैर्व्यपोहतीति तत्र प्रायश्चित्तोपदेशवैयर्थ्यापत्त्या निषेधविधेस्तद

अथवा बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वे सति कृतिसाध्यत्वं विध्यर्थः॥ तदभावश्च नञा बोध्य
मानो विशिष्टाभावो विशेष्यवति विशेषणाभावे विश्राम्यति ननु श्येनेनाभिचरन्यजेतेत्यादौ कथं बलवदनिष्टाननु
बन्धित्वमर्थः श्येनस्य मरणानुकूलव्यापारस्य हिंसात्वेन नरकसाधनत्वात् न च वैधत्वान्न निषेध इति वाच्य
म् अभिचारे प्रायश्चित्तोपदेशात् न च मरणानुकूलव्यापारमात्रं यदि हिंसा तदा खड्गकारस्य कूपकर्तुश्च हिं
सकत्वापत्तिर्गरललग्नान्नभक्षणजन्यमरणे आत्मवधत्वापत्तिश्चेति वाच्यम्॥ छ॥ छ॥ छ॥ छ॥॥

तिरिक्तपरत्वन्तु सम्भवतीति भावः॥ नचैवं यज्ञीयपशुहिंसाया अपि प्रत्यवायजनकत्वापत्तिरिति वाच्यम् अनुपदिष्टप्रायश्चित्तहिंसे
तरहिंसापरत्वान्मा हिंस्यादिति निषेधविधेरिति साक्षान्मरणानुकूलव्यापार एव हिंसा न हि श्येनस्तथेति मा हिंस्यादिति निषेधाविषयत्वादस्य
बबलवदनिष्टाननुबन्धित्वमित्यभिप्रायेण साक्षात्परम्परासाधारणमरणानुकूलव्यापारमात्रस्य हिंसात्वे दोषमाह मरणानुकूलव्याप
रमात्रं यदि हिंसा तदेति साक्षात्परम्परासाधारणः सर्वोऽपि व्यापारो यदि हिंसा तदेत्यर्थः॥ छ॥ ॥ ननु मरणोद्देश्यकत्वनिवेशोऽन्योद्दे
शेन प्रक्षिप्तनाराचेन यत्र ब्राह्मणमृतिस्तत्र प्रायश्चित्तं न स्यात्॥ श्री॥ श्री॥ छ॥ छ॥ छ॥ ॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥ छ॥

तस्य हिंसात्वाभावेन मा हिंस्यादिति निषेधाविषयत्वादत आह अन्योद्देश्यकेति वाचनिकमिति ननु मा हिंस्यादिति निषेधविषयतयेति भावः॥ अदृ
ष्टाद्वारकत्वेनेति श्येनस्यादृष्टाद्वारैव वैरिमरणसाधनत्वादिति भावः। नन्वस्तु श्येनस्य हिंसात्वं किमदृष्टाद्वारकत्वविशेषणेनेत्यत आह अत
एवेति अदृष्टाद्वारकत्वविशेषणादेवेत्यर्थः॥ न हिंसात्वमिति तथा च तादृशशिवपूजादेर्हिंसात्ववारणायावश्यकेनादृष्टाद्वारकत्वविशेषणेन
श्येनस्यापि हिंसात्ववारणमिति भावः। ननु साक्षान्मरणजनकत्वविशेषणादेव तादृशशिवपूजनश्येनादेर्वारणे किमदृष्टाद्वारकत्वेन गुरुवि।
शेषणेनेति तटस्थः शङ्कते। न च साक्षादिति अदृष्टाद्वारकत्वविशेषणं विनैव श्येनेऽवलवदनिष्टानुबन्धित्वमुपपादयतामस्मत आह केचित्त्विति हिं
साफलमिति साक्षान्मरणफलको व्यापारः फलमित्यर्थः तस्य खड्गाभिघातादेः पापजनकत्वमिति अभिचारसहीनत्वेन्यादिना भिचार वि

मरणोद्देश्यकत्वस्यापि विशेषणत्वात् अन्योद्देश्यकक्षिप्रनाशाच्च हननब्राह्मणस्य तु वाचनिकप्रायश्चित्तमिति
चेन्न श्येनवारणायादृष्टाद्वारकत्वेन विशेषणात् अत एव काशीमरणार्थकृतशिवपूजादेरपि न हिंसात्वम् न
च साक्षान्मरणजनकस्यैव हिंसात्वं श्येनस्तु न तथा किन्तु तज्जन्यापूर्वमिति वाच्यम् खड्गघातेन ब्राह्मणे व्रण
पाकपरम्परया मृते हिंसात्वानापत्तेः केचित्तु श्येनस्य हिंसाफलत्वं तु मरणत्वेन श्येनजन्यखड्गाघातादिरू
पा हिंसाभिचारपदार्थस्तस्य पापजनकत्वम् अतः श्येनस्यैवैधत्वात्पापाजनकत्वेपि अग्रिमपापस्मृतिसम्भ

॥ यस्मिन्नोन प्रवर्त्तन्त इत्याहुः

स्य पापजनकत्वं नो धत्वात्साक्षान्मरणजनकव्यापारस्यैवाभिचारपदार्थत्वादिति भावः॥ न च पूर्वं
त्वेत्यादिना साक्षान्मरणजनकव्यापारस्यैव हिंसात्वमित्याशङ्कितत्वात्तेन पौनरुक्त्यमिति वाच्यं पूर्वं साक्षान्मरणजनकस्य श्येनज
न्यापूर्वस्य हिंसात्वमाशङ्कितमिह च तथाभूतस्य खड्गाभिघातादेरपि भेदात् न चादिपदेन श्येनजन्यापूर्वस्य तथाभूतस्य ग्रहणात्कथ
म्भेद इति वाच्यम् श्येनजन्यापूर्वस्यैतन्मते खड्गाभिघातस्यैव व्यापारतया तस्य मरणजनकत्वाभावात् न च साक्षान्मरणजनक
व्यापारस्य हिंसात्वे खड्गघातेन ब्राह्मणे व्रणपाकपरम्परया मृते हिंसात्वानुपपत्तिस्तदवस्थैवेति वाच्यम् तत्र खड्गघातादुत्तरमेव॥ः

सन्निपातादिदोषस्योत्पन्नस्यामरणस्य प्रतिनियतस्य व्यापारस्तया व्यापारेण व्यवधानासम्भवात् कुतस्तर्ह्यास्तिकानां श्येनेन प्रवृत्तिरत आह अग्नि
ष्टेति तथा च पातकप्रयोजकत्वान्न तत्रास्तिकानां प्रवृत्तिरिति भावः॥ अत्र नव्याः॥ मास्तु श्येनस्य मा हिंस्यादिति निषेधविषयत्वं तथा
प्यभिचारतया पापजनकत्वं सर्वसम्मतम् अभिचारस्योपपातकमध्ये मनुना परिगणितत्वादिति कथं तस्य बलवदनिष्टाननुबन्धित्वम्॥
यच्चोक्तं श्येनजन्यखड्गाभिघातादेरेवाभिचारतया पापजनकत्वं न श्येनस्येति तदपि न अभिचारमहीनश्चैतस्याभिचारपदेन तज्जनक
श्येनादेर्ग्रहणात् अन्यथा प्रत्यभिचारेण यत्र न खड्गघाताद्युत्पत्तिस्तत्र प्रायश्चित्तं न स्यात् एवमपि श्येने पापप्रयोजकतया बलवदनि-
ष्टाप्रयोजकत्वोपपादनस्याशक्यत्वाच्च प्रवृत्तिं प्रति बलवदनिष्टाप्रयोजकत्वज्ञानस्यैव जनकतया तद्विषयस्यैव विध्यर्थत्वात् तथा च श्ये
नस्य बलवदनिष्टाननुबन्धित्वमुपपाद्य विधेर्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे शक्तिरयुक्ता किन्तु
त्रिषु शक्तित्रयं स्वीकृत्य क्वचित्कस्यचित् क्वचित्कस्यचिदर्थस्य बोध इत्यङ्गीकरणीयम् श्येनेनेत्यादौ तु बलवदनिष्टाननुबन्धित्वस्य बोधो
न भवत्येव परन्त्विष्टसाधनत्वकृतिसाध्यत्वयोरेवेति किञ्च विशेषणविशेष्यभावे विनिगमनाविरहेणापि विशिष्टे शक्तिर्न युक्ता न च प्रत्ये
कं शक्तिं स्वीकृत्य क्वचित् कस्यचिदर्थस्य बोधोपगमे नियामकाभाव इति वाच्यम् तात्पर्यस्यैव नियामकत्वात् प्रत्येकशक्तिपक्षेऽगम्यङ्गः।
श्चेदित्यादिवाक्यानामिष्टसाधनत्वादिप्रमाजनकतया प्रामाण्यापत्तिरित्यपि न॥ इष्टापत्तेः॥ तत्राप्रामाण्यव्यवहारस्तु कदाचिद्बलवदनि
ष्टाननुबन्धित्वभ्रमजनकत्वनिबन्धनः॥ न च बलवदनिष्टाननुबन्धित्वे सतीष्टसाधनत्वे सति कृतिसाध्यः पाक इत्येव बोधोऽनुक्तकृतिसाध्य
त्वे सतीत्यादिरूप इति विशिष्टशक्तिपक्षेऽपि न विनिगमनाविरह इति वाच्यम्॥ तथैव बोधो नान्यथेत्यस्य शपथनिर्णेयत्वात् तस्माद्बलवद
निष्टाननुबन्धित्वादिषु प्रत्येकं शक्तिरिति प्रथमकल्प एव युक्तः॥ तत्रापि बलवदनिष्टाननुबन्धित्वं नार्थः यागादिजन्यनान्तरीयकदुःख-
स्यापि यदा कदाचित्॥ यस्य कस्यचिद्बलवद्द्वेषविषयतया यजेतेत्यादीनामप्रामाण्यापत्तेः॥ न कलञ्जमित्यादिनिषेधविधिवदश्वमे
धेन न यजेतेत्यादीनामपि प्रामाण्यापत्तेश्च अश्वमेधादौ यदा यः पुरुषः प्रवर्त्तते तत्कालीनतत्पुरुषीयबलवद्द्वेषविषयाजनकमर्थ इति
नसन् कालभेदेन पुरुषभेदेन च विधिशक्तिकल्पने गौरवात् कालविशेषपुरुषविशेषाणां विशिष्य ज्ञातुमशक्यतया कालविशेषपुरुष-
॥ विशेषानन्तर्भावेन शक्तेर्दुर्ग्रहत्वाच्च नाश्वमेधेन यजेतेत्या॥ ६॥

दिनिषेधविधिवन्नकलञ्जम्भक्षयेदित्यादिनिषेधविधीनामप्रामाण्यापत्तेश्चतत्रयद्वायः पुरुषः प्रवर्त्ततेतत्कालीनतत्पुरुषीयबलवद्द्वेष
विषयाजनकत्वस्यतत्रापिसत्वात् किन्तुवैदिकविधेःपापाजनकत्वमर्थः तदभावएवनकलञ्जम्भक्षयेदित्यादौनञाबोध्यते शाकत्वधुर्ज्ञीनेत्या
दिवाक्यस्यप्रामाण्यनिर्वाहाय रोगाजनकत्वमप्यर्थः एवमनुष्येनोद्वहेन्नैकः पर्वतमारोहेदित्यादावपितेदृनिष्टाजनकत्वमर्थेबोध्यः नच।
शक्यानन्त्यमन्तरकत्वरोगत्वादीनान्द्वेषविषयतावच्छेदकत्वेनोपलक्षणीभूतेनानुगमय्यतदवच्छिन्नप्रतियोगिताकाभावकूटैकशक्त्या
भ्युपगमात् रोगाद्यजनकत्वादौलौकिकलिङ्गोलक्षणाभ्युपगमाद्वेतिवदन्ति॥ ७॥ ॥विध्यर्थश्चाप्ताभिप्रायः॥ सचस्वेष्टसाधनतानुमाप
कइष्टसाधनताज्ञानञ्चप्रवर्त्तकमित्युदयनाचार्यमतमाह आचार्यास्त्विति इत्यादावित्यादिना॥ पाकङ्कुर्यामित्युत्तमपुरुषपरिग्रहः॥ आ

आचार्यास्तु आप्ताभिप्रायोविध्यर्थः॥ पाकङ्कुर्याइत्यादावाज्ञादिरूपेच्छावाचित्ववत्। लिङ्मा
त्रस्येच्छावाचित्वंलाघवात् एवञ्चस्वर्गकामोयजेतेत्यादौयागःस्वर्गकामकृतिसाध्यतयाआप्तेष्टइत्यर्थः
ततश्चाप्तेष्टत्वेनेष्टसाधनत्वादिकमनुमायप्रवर्त्तते कलञ्जभक्षणेतदभावान्नप्रवर्त्तते यस्तुवेदेपौरुषे।
यत्वन्नाभ्युपैतितम्प्रति विधिरेवतावद्गर्भइवश्रुतिकुमार्याः पुंयोगेमानम्॥ ८॥ ९॥ ७॥ ७॥ ॥

ज्ञादीत्यादिनाध्येषणापरिग्रहः॥ तथाचपाकङ्कुर्याः पाकङ्कुर्यामिति मध्यमोत्तमपुरुषयोराज्ञाध्येषणारूपेच्छावाचित्वङ्क्लृप्तन्त
दृष्टान्तेनप्रथमपुरुषेपीच्छावाचित्वमनुमेयमितिभावः॥ लाघवादिति बलवदनिष्टाननुबन्धीष्टसाधनत्वाद्यपेक्षयेच्छात्वेनवि।
धित्वेलाघवादित्यर्थः॥ इत्यर्थः इतिबोधः॥ अनुमायेति अत्रचयागोममस्वर्गकामस्यबलवदनिष्टाननुबन्धीष्टसाधनम्मत्कृति
साध्यतयाप्तेनेष्यमाणत्वात् मन्मात्रकृतिसाध्यतयेष्यमाणमद्भोजनवदित्यनुमानमवधेयम् तदभावात् आप्तेष्टत्वाभावेनहेतुकेष्ट
साधनत्वज्ञानाभावात् ननुवेदेवक्तुरभावात्कस्येच्छालिङाबोधनीयेत्यतआह यस्त्विति विधिरेवेति वक्तृभिन्नेच्छायाबोधनेविधेः
॥ सामर्थ्याभावाद्विधिरेववेदवक्तरीश्वरेमानमितिभावः॥

नच कर्त्रैस्स्मरणमिति कर्त्तुः वेदकर्त्तुः अस्मरणं स्मृतिभिरबोधनम् तथाच वेदोऽपौरुषेयः अस्मर्यमाणकर्तृकत्वादित्यनुमानं बाधकमित्य
र्थः ॥ कपिलकणादेति कपिलकणादगौतमादिभिस्तच्छिष्यैश्चाद्यपर्यन्तमित्यर्थः ॥ कर्तृस्मरणस्य सकर्तृकत्वबोधकस्मृतेरित्यर्थः ॥ नन्वी
श्वरस्य वेदवक्तुः सर्गादौ केनचित्साक्षाद्दृष्टत्वाद्वेदनानुभवे स्मरणं तदभावे ऋषीणां स्मृतिप्रणयनञ्च न सम्भवतीति चेन्न पौरुषेयत्वानुमा
नेनैव वेदवक्तारमनुभूय तन्मूलकश्रुतिस्मृतिप्रणयनयोः सम्भवात् अन्यथा वेदे सकर्तृकत्वानङ्गीकारे तत्रैव स्मृतिष्वेव वेदस्य सकर्तृकत्वे
श्रुतिस्मारदर्श्य स्मृतिमपि प्रदर्शयति एवमिति ननु वेदस्य नित्यत्वबोधकम्भारताद्येव तस्याः कर्तृकत्वे प्रमाणम्भविष्यतीत्याशङ्क्य तेस्वयम्भू
रिति नित्यइत्यर्थः । एष भगवानित्यपि वेदविशेषणं स्तुतिमात्रमिति तथाच पूर्वोक्तश्रुतिस्मृत्योर्विरोधेनास्य भारतस्य न स्वार्थे तात्पर्यमि

नच कर्त्रैस्स्मरणं बाधकम् कपिलकणादादिभिराद्यपर्यन्तङ्कर्तृस्मरणस्यैव प्रतीयमानत्वात् अन्यथा स्मृतीनाम
प्यकर्तृकत्वापत्तेः तत्रैव कर्त्तृस्मरणमस्तीति चेद् वेदेऽपि छन्दांसि जज्ञिरे तस्मादित्यादिकर्तृस्मरणमस्त्येव एवम्प्रति
मन्वन्तरञ्चैषा श्रुतिरन्या विधीयते इत्यपि द्रष्टव्यम् स्वयम्भूरेष भगवान्वेदो गीतस्त्वया पुरा शिवाद्यृषिपर्यन्ताः
स्मर्तारोऽस्य न कारकाइति तु वेदस्य स्तुतिमात्रम् नच पौरुषेयत्वे भ्रमादिसम्भवात् प्रामाण्यं स्यादिति वाच्यम् नि
त्यसर्वज्ञप्रणीतत्वेन निर्दोषत्वात् अत एव पुरुषान्तरस्य भ्रमादिसंभवात्कपिलादेरपि कर्तृत्वं वेदस्य ॥ १ ॥ छ ॥

पि तु स्तुतिपरत्वमिति भावः भ्रमादिसम्भवात् पुरुषस्य भ्रमप्रमादादिदोषसम्भवादित्यर्थः । नित्यसर्वज्ञत्वेनेति नित्यसर्वविषयकज्ञा
नवत्वेनेत्यर्थः निर्दोषत्वात् भ्रमादिशून्यत्वात् अत एव नित्यसर्वज्ञत्वभावादेव ॥ ॥ छ ॥ ॥ ननु नित्यसर्वज्ञपुरुषप्रणीतत्वापेक्षया नि
त्यनिर्दोषत्वं वेदस्योक्तत्वात्तदेव वेदप्रामाण्ये प्रयोजकमस्तु तथाच सकर्तृत्वानुमाने बाध इत्यतो वेदस्य नित्यत्वे बाधकमाह किञ्चे
ति तत्सन्दर्भस्येति तन्निष्ठानुपूर्वीविशेषस्येत्यर्थः ॥ आनुपूर्व्या नित्यत्वे तन्नित्यसमवेतनित्यस्य जातित्वे नानुपूर्व्या जातित्वापत्तेरिति ।
भावः ॥ अत्र चाप्रेच्छाविषयत्वस्येश्वरेच्छाविषयत्वरूपस्य केवलान्वयिनः कलञ्जभक्षणे ॥ श्री ॥ ॥ ॥ छ ॥ छ ॥ छ ॥ ॥

पि सत्वाद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसाध्यस्य च तत्राभावेन व्यभिचारात्कथन्तस्य तदनुमापकत्वम् बलवदनिष्टाननुबन्धि
त्वविशिष्टेष्टसाधनत्वप्रकारकेच्छाया लिङर्थत्वे च लाघवाद्बलवदनिष्टाननुबन्धीष्टसाधनत्वमेव लिङर्थोस्तु कृतमा प्रेच्छयेत्यस्वरस आ॥
चार्यैस्तित्यनेन सूचितः॥ नन्विष्टसाधनत्वस्य न विधितो बाधः संभवति स्वर्गत्वावच्छिन्नसाधनत्वस्य यागे बाधात् गङ्गास्नानादिजन्यस्वर्गे व्य
भिचारात् स्वर्गनिष्ठवैजात्यावच्छिन्नसाधनत्वस्य यागे सत्वेपि तद्वैजात्यस्य विधिबोधितस्वर्गसाधनत्वान्यथानुपपत्त्या कल्पनीयस्य प्राग
नुपस्थित्या तद्घटितकारणत्वे विधिशक्तिग्रहायोगादिति चेन्न स्वरूपसंबंधविशेषरूपाया एव कारणताया विध्यर्थत्वोपगमादित्येके॥ अन्यथा

किन्त्ववर्णानामेवानित्यत्वस्य वक्ष्यमाणत्वात्तु तदन्तःसन्दर्भस्य वेदस्यानित्यत्वमिति सङ्क्षेपः॥ १॥ ॥उपादानस्येति॥
उपादानस्य समवायिकारणस्याध्यक्षम् प्रत्यक्षम्प्रवृत्तौ कारणमिति निवृत्तिरिति द्विष्टसाधनताज्ञानस्य निवृत्तिम्प्रति

उपादानस्याध्यक्षम्प्रवृत्तौ जनकम्भवेत्। निवृत्तिस्तु भवेद्द्वेषाद्द्विष्टसाधनताधियः १४९ यत्नो जीवनयो
निस्तु सर्वदातीन्द्रियो भवेत्॥ १॥

१ जनकत्वमन्वयव्यतिरेकाभ्यामवधारितमिति भावः १४९॥ १५०॥ १५१॥ य
त्न इति जीवनयोनियत्नो यावज्जीवनमनुवर्तते स चातीन्द्रियः तत्र प्रमाणमाह॥ १ सिद्धिनिरूपकतानवच्छेदकनियततत्तदवच्छिन्ना
वच्छेदकधर्मवत्स्वर्गकत्वमेव स्वर्गकारणत्वमित्यन्ये॥ वस्तुतस्तु स्वर्गनिष्ठधर्मावच्छिन्ननिरूपितनियतपूर्ववर्तितावच्छेदकधर्मवत्त्वमेव स्वर्गकारणत्वम् नच
यागे न बाधितं स्वर्गनिष्ठवैजात्यरूपस्वर्गधर्मावच्छिन्नम्प्रति यागस्य व्यभिचाराभावात् ननु विधेरिष्टसाधनत्वे शक्तित्वेपि स्वर्गसाधनत्वस्य कथन्त
तो बोधः स्वर्गसाधनत्वादौ विधिशक्तिकल्पने तु शक्त्यानन्त्यम् नच विधिप्रत्ययोपस्थिते इष्टे स्वर्गपदोपस्थितस्वर्गस्याभेदेनान्वयात् स्वर्गा
भिन्नेष्टसाधनत्वस्य बोधः सम्भवतीति वाच्यम् स्वर्गपदस्य समासान्तर्गततया तदर्थस्यान्यत्रान्वयासम्भवादिति चेन्न स्वर्गसाधनत्वादौ विधेः
शक्तिकल्पने न तथा बोधनिर्वाहात् नचैवैकस्य बोधे विधेर्विनिगमकाभावः स्वर्गादिपदसमभिव्याहाराधीनतद्धर्मघटितसाधनत्वे तात्पर्यग्रहस्यैव वि

नचैवंविधिशक्त्यानन्त्यं स्वर्गत्वादिधर्मावच्छिन्ननिरूपितसाधनत्वेष्वेकशक्त्युपगमात् नच शक्यतावच्छेदकभेदाच्छक्तिभेदः इष्टतावच्छेदकत्वेन स्वर्गत्वादीन्यनुगतीकृत्य तदवच्छिन्ननिरूपितसाधनत्व एकशक्त्युपगमात् नचेष्टतावच्छेदकत्वेनैव शाब्दबोधे स्वर्गत्वादीनामाभानं स्यादन्तुसरूपतदिति वाच्यम् इष्टतावच्छेदकत्वस्योपलक्षणतया शक्तिविषयत्वाद्विशेषणस्यैव शाब्दबोधेमानोपगमात् उपलक्षणत्वञ्चतत्प्रयुक्तजन्यबोधाविषयत्वे न शक्तिविषयत्वत्वं तत्प्रयुक्तजन्यबोधविषयत्वेन शक्तिविषयत्वमेव च विशेषणत्वमित्यन्यत्र विस्तरः समवायिकारणस्येति तत्साधकप्रवृत्तिम्प्रति तत्समवायिकारणात्मकतदुपादानगोचरलौकिकप्रत्यक्षस्य हेतुत्वम् नच शब्दसाधकप्रवृत्तिर्मृदङ्गादौ नस्यात्तदुपादानस्यगग

शरीरइति प्राणसञ्चारो हि प्रयत्नसाध्यः इत्थञ्च प्राणसञ्चारस्य सर्वस्य यत्नसाध्यत्वानुमानात् प्रत्यक्षप्रयत्नबाधाच्चातीन्द्रिययत्नसिद्धिः सएव जीवनयोनिर्यत्नः गुरुत्वन्निरूपयति अतीन्द्रियमिति अनित्येति अनित्ये द्व्यणुकादौ तद्गुरुत्व

शरीरे प्राणसञ्चारे कारणन्तत्प्रकीर्त्तितम् १५२ अतीन्द्रियङ्गुरुत्वं स्यात्पृथिव्यादिद्वये तु तत् अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् १५३ तदेवासमवायि स्यात्पतनाख्ये तु कर्मणि सांसिद्धिकन्द्रवत्वं स्यान्नैमित्तिकमथापरम् १५४ सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः॥ १ मनित्यन्नित्ये परमाणौ नित्यङ्गुरुत्वमित्यनुवर्त्तते

॥तद्गुरुत्वमसमवायि असमवायिकारणम् तदेवेति पतनाख्य इति आद्यपतने इत्यर्थः द्रवत्वन्निरूपयति सांसिद्धिकमिति द्रवत्वं द्विविधं॥ सांसिद्धिकन्नैमित्तिकञ्चेत्यर्थः॥ द्वितीयम् नैमित्तिकम्॥ १ नस्यातीन्द्रियत्वात् एवञ्च शब्दसाधकप्रवृत्तिरपि तत्समवायिनोऽप्रसिद्धेरिति वाच्यम् इष्टापत्तेः शब्दसाक्षात्कारसाधकप्रवृत्तेरेव मृदङ्गादिगोचरतया उपगमादिति प्राचीनमतानुसारेणेदम्॥ नवीनमते त्वधिष्ठानमात्रमुपादानम्बोध्यम् तेन योगादेर्हविः शब्दस्य मृदङ्गादिः प्राणसञ्चारादेश्च प्राणवहनाड्यादिरुपादानमिति बोध्यम् १४९।१५०।१५१ मूले द्वेषादिति फलगतो द्वेषो द्विष्टसाधनताज्ञानञ्च निवृत्तिम्प्रतिकारणमित्यभिप्रायेणोक्तम् प्राणसञ्चारो हीति॥

अधिकश्वासादिः प्राणसञ्चारो यत्नसाध्यः प्रत्यक्षयत्नसाध्यतया दृष्टः धावतः प्रयत्नोत्कर्षेण श्वासस्य क्रियोत्कर्षदर्शनादितिभावः। इत्थञ्चेति दृ
ष्टान्तसिद्धावित्यर्थः सर्वस्येति। एकत्र यत्नसाध्यत्वस्यानुभविकत्वेन तद्दृष्टान्तेन प्राणसञ्चारत्वावच्छेदेन सर्वत्रैव भोक्तृयत्नजन्यत्वानुमानादिति।
भावः सएव प्राणसञ्चारहेतुत्वेनानुमीयमानएव नत्वायासुजीवनयोनियत्ने मानाभावः प्राणक्रियाया अदृष्टविशेषप्रयोज्यात्ममनोयोगस्य
वा जीवनायत्नप्रयोजकादृष्टाद्यासम्भवादुक्तानुमानस्य चाप्रयोजकत्वात् अन्यथैकत्र यत्नेज्ञानजन्यत्वदृष्टान्तेनजन्ययत्नत्वावच्छेदेन

परमाणाविति जलपरमाणौ द्रवत्वन्नित्यमित्यर्थः। अन्यत्र पृथिवीपरमाण्वादौ जलद्व्यणुकादौ च द्रवत्वमनित्यं। कुत्रचि
त्तेजसि कुत्रचित्पृथिव्याञ्च नैमित्तिकं द्रवत्वन्तत्र कोवा नैमित्तिकार्थस्तद्दर्शयति १५३। १५४। १५५। नैमित्तिकमितिवन्हो
ति अग्निसंयोगजन्यं नैमित्तिकन्द्रवत्वम् तच्च सुवर्णादिरूपे तेजसि घृतजतुप्रभृतिपृथिव्यां वर्त्तत इत्यर्थः द्रवत्वमितिहेतुमि

परमाणौ जले नित्यमन्यत्रानित्यमिष्यते १५५ नैमित्तिकं वह्नियोगात्तपनीयघृतादिषु द्रवत्वं स्यन्दने हेतु।
र्निमित्तं सङ्ग्रहे तु तत् १५६ स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ तैलान्तरे तत्प्रकर्षाद्दहनस्यानुकूल
ता १५७ संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने॥ ॥ इत्यसमवायिकारणमित्यर्थः सङ्ग्रहे सक्तुकादिसंयोग
विशेषेन द्रवत्वं स्नेहसहितमितिबोद्धव्यम् तेनद्रुतसुवर्णादीनान्नसङ्ग्रहः १५६ स्नेहन्निरूपयति। जलइति जलएवेत्यर्थः
। असौस्नेहः। ननु पृथिव्यामपि तैलेस्नेह उपलभ्यते तेन चासौ जलीयस्तथा सति दहनप्रातिकूल्यप्रसङ्गात् अत आह॥ तै
लान्तर इति। तत्प्रकर्षात्॥ ॥ शे

त्वानजन्यत्वकल्पनापत्त्या सुषुप्तौ ज्ञानादेरप्यतीन्द्रियस्य कल्पनापत्तेरितिप्राहुः १५२ पतनसम
वायिभिन्नत्वरूपं पतनासमवायित्वरूपा द्यावतिव्याप्तमतो व्याचष्टे असमवायिकारणमिति द्वितीयादिपतनस्य वेगासमवायिकारणकत्वा
दाह आद्येति एवञ्च संयोगासमवधानकालीनाक्रियागुणासमवायिकारणिकाक्रियात्वात्संयोगजन्यक्रियावदित्यनुमानेन गुरुत्वसिद्धिरितिभावः

॥ मु० टी० मु० टी० ॥

अग्निसंयोगजन्यमिति अग्निसंयोगासमवायिकारणकमित्यर्थः। वक्ष्यमाणातिप्रसङ्गादाह स्नेहसहितमिति न च सांसिद्धिकमेव तथा च सांसिद्धिकद्रवत्वेनैव हेतुत्वात्सुवर्णादिद्रवत्वस्य सङ्ग्रह इति भावः॥ न चावश्यकस्नेह हेतुत्वेनैवानतिप्रसङ्गे सांसिद्धिकद्रवत्वस्य सङ्ग्रहहेतुत्वे मानाभाव इति वाच्यम् स्नेहत्वेन सांसिद्धिकद्रवत्वत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहेणोभयस्यापि हेतुत्वात् १५६ असौ तैले प्रतीयमानः स्नेहो जलीयः तैलान्तर्गतजलभागनिष्ठस्तथा सति तैलान्तर्जलभागस्वीकारे दहनप्रातिकूल्यप्रसङ्गात् दहननाशप्रसङ्गात् दहनाश्मप्रतिसे

स्नेहप्रकर्षात्तैले उपलभ्यमानः स्नेहोऽपि जलीय एव तस्य प्रकृष्टत्वाद्दहनेनानुकूल्यम् अपकृष्टस्नेहं हि जलं वह्निं नाश यतीति भावः १५७ संस्कारन्निरूपयति संस्कारभेद इति वेगस्थितिस्थापकभावनाभेदात्संस्कारस्त्रिविध इत्यर्थः॥ छ॥ मूर्त्तमात्र इति कर्मजवेगजभेदाद्वेगो द्विविध इत्यर्थः॥ शरीरादौ हि नोदनजनितेन कर्मणा वेगो जन्यते तेन च पूर्वकर्मनाश॰

मूर्त्तमात्रे तु वेगः स्यात्कर्मजो वेगजः क्वचित् १५८ स्थितिः स्थापकसंस्कारः क्षितौ केचिच्चतुर्ष्वपि अतीन्द्रियोऽसौ विज्ञेयः क्वचित्स्पन्देऽपि कारणम् १५९॥

॰स्तत उत्तरकर्मण एवमग्रेऽपि विना च वेगं कर्मणः प्रतिबन्धकत्वात्पूर्वकर्मनाशे उत्तरकर्मोत्पत्तिश्च न स्यात् यत्र च वेगवता कपालेन जनिते घटे वेगो जन्यते स वेगजो वेगः १५८ स्थितिस्थापकेति अतीन्द्रिय इति अकृष्टशाखादीनां परित्यागे पुनर्गमनस्य॥

॥ योगेन जलस्य हेतुत्वादिति भावः १५७ वेगो जन्य इति वेगत्वन्तु जातिविशेषः प्रत्यक्षसिद्धः॥ तेनेति॥ कर्मनाशकस्योत्तरसंयोगस्य तदानीमभावाद्वेगस्यैव कर्मनाशकत्वं कल्प्यत इति भावः तत इति॥ पूर्वकर्मनाशानन्तरमित्यर्थः॥ एवमग्रेऽपीति॥ उत्तरकर्मणापि पूर्ववेगनाशस्ततो वेगान्तरोत्पत्तिरित्येषा दिगित्यर्थः॥ विना च वेगमिति वेगं विना कर्मनाशो न स्यादित्यन्वयः॥ नाशकान्तराभावादिति भावः ननु पूर्वकर्मणो नाशाभावे का क्षतिरत आह कर्मोत्पत्तिश्च न स्यादिति॥ अत्र हेतुः कर्मणः प्रतिबन्धकत्वादिति अत्र केचित् उत्तरसंयोगेनैव पूर्वकर्मनाशोत्तरकर्मणोः॥ ६॥ ॥ ६॥ ॥ ९॥ ॥ छ॥ छ॥

संभवात्तत्पूर्वकर्मनाशकर्मोत्पत्तिस्वीकारेप्रयोजनाभावात्त्वंवेगेनतस्माद्वेगेनगच्छतीतिकर्मजनकतयाप्रत्यक्षमेववेगेप्रमाणमित्याहुः॥१५८॥पुनर्गमनेस्येति यथापूर्वंसंयोगजनकक्रियायाइत्यर्थः॥ छ॥ स्थितिस्थापकसाध्यत्वादिति॥वेगस्यनूत्नदेशसंयोगजनकक्रियाजनकत्वान्नतुयथापूर्वसंयोगजनकक्रियाजनकत्वमितिनवेगेनस्थितिस्थापकस्यान्यथासिद्धिरितिभावः॥स्थितिस्थापकत्वंजातिविशेषःक्रियाविशेषजनकतावच्छेदकतयासिद्धः॥स्थितिस्थापकश्चक्रियाविशेषजनकःस्वजन्यक्रियानाश्योऽतीन्द्रियश्चेतिमूलेउक्तप्रायम् १५९॥इ

स्थितिस्थापकसाध्यत्वात्केचिदिति चतुर्ष्वित्यादिषुस्थितिस्थापकङ्केचिन्मन्यंतेतत्रप्रमाणमितिभावः।असौस्थितिस्थापकःक्वचित्दृक्पृष्णत्वादौ १५९ भावनाख्यइतितस्यसंस्कारस्योपेक्षात्मकज्ञानानासंस्कारोनुत्पत्तेरुपेक्षानात्मकइत्युक्तं।तत्संशयात्तस्यानुत्पत्तेर्निश्चयइत्युक्तंतेनोपेक्षान्यनिश्चयत्वेनसंस्कारम्प्रतिहेतुत्वेतिभावः ननुस्मरणम्प्रत्युपेक्षान्यनिश्च

भावनाख्यस्तुसंस्कारोजीववृत्तिरतीन्द्रियः उपेक्षानात्मकस्तस्यनिश्चयः कारणंभवेत् १६० स्मरणेप्रत्यभि

ज्ञायामप्यसौहेतुरुच्यते॥ ((यत्वेनहेतुत्वंतेनोपेक्षादिस्थलेनस्मरणम् इत्यञ्चसंस्कारम्प्रतिज्ञानत्वेनैवहेतुतास्त्वितिचेन्न विनिगमनाविरहेणापिसंस्कारम्प्रतिउपेक्षान्यनिश्चयत्वेहेतुतायाःसिद्धत्वात् किञ्चोपेक्षास्थलेसंस्कारकल्पनायाःगुरुत्वात्संस्कारम्प्रतिउपेक्षान्यत्वेनहेतुतायाःसिद्धत्वात् असौसंस्कारः तत्रप्रमाणन्दर्शयतिस्मरणइति यतःस्मरणंप्रत्यभिज्ञानञ्चजनयत्यतःसंस्कारःकल्प्यते॥ ((त्यञ्चउक्तप्रकारेणोपेक्षाज्ञानात्स्मृतिवारणेचवस्तुतःसंस्कारम्प्रत्युपेक्षान्यनिश्चयत्वेनहेतुत्वएवविनिगमकमस्तीत्याह किञ्चेतिसंस्कारकल्पनायागुरुत्वादित्यस्यस्मृतिम्प्रत्येवोपेक्षान्यनिश्चयत्वेनहेतुत्वइत्यादिः॥सिद्धत्वादित्यग्रिमस्यापिपञ्चम्यन्तस्यनेत्यनेनान्वयः॥उद्देश्यवाचकपदस्यप्रागपेक्षितत्वात्तथान्वयप्रदर्शनार्थमुदीच्यस्याप्यसावित्यस्यप्राक्धारणमितिबोध्यम् तत्रसंस्कारे॥ अतःसंस्कारःकल्प्यतइति अथानुभवस्यध्वंसएवव्यापारोस्तुप्रतियोग्यभावयोरेकत्राजनकत्वमित्यस्याप्रयोजकत्वात् नचानुभवस्यस्मृतिंप्रतिप्रतिबन्धकत्वापत्तिरितिवाच्यम्॥ श्रीः॥ ॥ श्रीः॥ ॥छ॥ ॥ ॥ ॥ ॥

संसर्गाभावत्वावच्छिन्नकारणताश्रयीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकतापदार्थत्वादिह च संसर्गाभावत्वेनाजनकत्वात् नचानुभवद्वितीयक्षणोत्पन्नसंस्कारेण तृतीयक्षणे स्मरणसंभवात्ध्वंसस्य व्यापारत्वं न सम्भवति फलस्य प्राक्काले ऽनुभवध्वंसस्याभावादिति वाच्यम् तत्रापि क्षणविलम्बेनैव स्मरणाभ्युपगमादिति चेन्न संस्कारानङ्गीकारे कदाचिदनुभूतस्य सर्वदा स्मरणापत्तेः। अनुभवध्वंसात्मकव्यापारस्य सर्वदा सत्वात् नचोद्बोधकाभावात् स्मरणमिति वाच्यम् यत्र वस्तुविशेषज्ञानानन्तरं कोऽप्युद्बोधकेन दृश्यते तत्र वा घटादेः स्मरणं नि जानाति नन्वधिकानि तत्र घटादिस्मृतौ न दृष्टानि तस्यैव नियतोद्बोधकत्वं यानन्तरं उद्बोधकाभावस्य वक्तुमशक्यत्वात् वस्तुतस्त्वनुपदं वक्ष्यमाणपूर्वसाधकयुक्त्या संस्कारसिद्धिर्निरा

विनाव्यापारम्पूर्वानुभवस्य स्मरणादिजननाऽसामर्थ्यात् स्वस्वव्यापारान्यतराभावे कारणत्वासंभवात् नच प्रत्यभिज्ञाप्रतितत्त्वसंस्कारस्य हेतुत्वे प्रत्यभिज्ञा। याः संस्कारजन्यत्वेन स्मृतित्वापत्तिरिति वाच्यम् अप्रयोजकत्वात् परे त्वनुद्बुद्धसंस्का

धर्माधर्मावदृष्टं स्याद्धर्मः स्वर्गादिकारणम् ॥१६१॥ गङ्गास्नानादियागादिर्व्यापारः स तु कीर्तितः ॥ ६ ॥

रात्प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षयानन्तरं स्मरणस्यैव प्रत्यभिज्ञाप्रतिहेतुत्वङ्कल्प्यत इत्याहुः अदृष्टं निरूपयति धर्मेति स्वर्गादीति स्वर्गादिसकलसुखानां स्वर्गसाधनीभूतशरीरादीनाञ्च साधनं धर्म इत्यर्थः तत्र प्रमाणन्दर्शयितु ॥ माह यागादीति

बाधेति ध्येयम् स्वस्वव्यापाराभावे कार्योत्पत्त्यव्यवहितपूर्वक्षणे स्वस्वव्यापारान्यतराभावे कारणत्वासंभवादिति कार्याव्यवहितप्राक्क्षणवृत्ति स्वस्वव्यापारान्यतरकत्वस्यैव कारणतापदार्थत्वाभावादिति भावः॥ अप्रयोजकत्वादिति। संस्कारजन्यत्वस्य स्मृतित्वे प्रयोजकत्वाभावादित्यर्थः। मणिकृन्मतं न स्मरदर्शयति परे त्विति तन्मते ऽनन्तरकल्पनीयस्मृतिव्यक्तौ बुद्धसंस्कारस्य हेतुत्वकल्पनं मन्यते तु प्रत्यभिज्ञायान्तु हेतुत्वकल्पनमिति समानमनन्तरस्मृतिव्यक्तिकल्पने प्रत्यभिज्ञायान्तद्धेतुत्वकल्पने च न वाधिकङ्गौरवमित्याहुरित्यनेनास्वरसः सूचितः स्वर्गादीत्यत्र स्वर्गपदेन सुखमात्रस्यादिपदेन शरीरेन्द्रियादेः परिग्रह इति प्रदर्शयति स्वर्गादिसकलेत्यादिना अनेन नरकादीनामित्यत्राप्येवम् तत्र धर्मे ॥

यागादीति आदिना होमदानपरिग्रहः यागत्वञ्च देवतोद्देश्यकस्वस्वत्वध्वंसवद्द्रव्यविशेष्यकेच्छात्वम् देवतोद्देश्यकत्वन्देवतास्वत्ववद्विशेष्यकत्वम् शब्दमयो देवतेति पक्षे तु तस्याऽऽद्दमित्यारोपज्ञानविषयत्वमुद्देश्यत्वम् होमत्वञ्चाग्निसंयोगानुकूलक्रियानुकूलघृतादित्यागेनोदनो दिव्यापारत्वम् दानत्वञ्च मूल्यग्रहणं विना स्वस्वत्वध्वंसपरस्वत्वजनकत्यागत्वमिति सम्प्रदायः॥ यागत्वं होमत्वादयो मानसप्रत्यक्षगम्या जातिविशेषा इत्यन्ये श्राद्धस्यापि त्रपेक्षया यागत्वेन ब्राह्मणापेक्षया दानत्वेन तत्र साङ्कर्यान्नेदं युक्तमित्यपरे अन्यथा धर्माभावे चिरविनष्टस्याप्यनुभवस्य स्मृतिजनकत्वादाह निर्व्यापारतयेति चिरध्वस्तमिति चिरकालनष्टं कर्मातिशयमपूर्वं विना फलाय फलजननाय नालन्न समर्थमित्यर्थः॥

यागादिव्यापारतया धर्मः कल्प्यते अन्यथा यागादीनाञ्चिरविनष्टतया निर्व्यापारतया च कालान्तरभाविस्वर्गजनकत्वन्न स्यात्॥ तदुक्तमाचार्यैः चिरध्वस्तम्फलायालन्न कर्मातिशयं विनेति ननु यागध्वंस एव व्यापारः स्यात् न च प्रतियोगितत् ध्वंसयोरेकत्राजनकत्वं सर्वत्र तथात्वे मानाभावात् न च तन्मते फलानन्त्यम्मन्मते चरमफलस्यापूर्वनाशकत्वान्न तथात्वमिति वाच्यम् कालविशेषस्य सहकारित्वादित्यत आह गङ्गास्नानेति गङ्गास्नानस्य हि स्वर्गजनकत्वेऽनन्तानाञ्जलसंयोगध्वंसानाम्व्यापारत्वमपेक्ष्यैकमपूर्वमेव कल्प्यते लाघवादिति भावः॥ ननु ध्वंसोपि न व्यापारोऽस्तु न च निर्व्यापारस्य चिरध्वस्तस्य कथङ्कारणत्वमिति वाच्यम्॥ ई॥ ई॥ छ॥ ॥ श्रीई॥ छ॥ ॥ ए॥ ॥

तथात्वे ध्वंसप्रतियोगिनोरेकत्रजनकत्वाभावे एकमेवापूर्वङ्कल्प्यत इति वस्तुतस्तु यागस्यापि ध्वंसो न व्यापारः तथात्वे कीर्तितयागात्स्वर्गोत्पाद वारणाय स्वर्गजनकतावच्छेदककोटौ कीर्तितभेदो निवेशनीयस्तत्र च कीर्तितत्वस्यैकस्याभावेन कीर्तित्वावच्छिन्नप्रतियोगिताकभेदनिवेशनमशक्यमतः कीर्तितव्यक्तीनान्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताक एव भेदो निवेशनीयः एवञ्च दशकीर्तितयागस्थले परस्परन्तत्तद्व्यक्तिभेदसत्त्वेन स्वर्गोत्पादवारणाय भेदकूटस्यैव कारणतावच्छेदकत्वमुपगन्तव्यम् तत्र च विशेषणविशेष्यभावे विनिगमनाविरहेण। कार्यकारणभावानन्त्यमपूर्वं स्वीकारे तु क्षणिकतया कीर्तितयागनाम्मेलनासम्भवेन भेदानामेकत्र निवेशप्रयोजनाभावः॥ ई॥ ए॥

का॰मु॰ दि॰ २३४

यादृशकीर्त्तितयागादपूर्वमापादनीयन्तद्वैतावच्छिन्नयागव्यक्तेस्तदानीमभावात् न चापूर्वसम्बन्धेनकीर्त्तितयागव्यक्तीनाम्मेलनंसम्भ
वतीतिस्वर्गजनकतावच्छेदककोटौकीर्त्तितभेदानामेकत्रनिवेश आवश्यक इतिवाच्यम् अपूर्वाश्रयस्यैवास्वर्गसम्भवेस्वर्गजनकतावच्छेदक
कोटौकीर्त्तितभेदानामनिवेशात् कीर्त्तितयागाद्वंसोन्यादेनध्वंसजनकतावच्छेदककोटौकीर्त्तितभेदनिवेशस्यासम्भवादित्यन्यैरपरिशीलि॰
तःपन्थाः कारणत्वइति घटकत्वसप्तम्यर्थः एवमग्रेपिकार्यकालवृत्तित्वमेवेति यथासमवायिकारणस्यकारणत्वेकार्यकालवृत्तित्वम्घट
कत्वन्तसमवायिकारणस्यकारणत्वेनशेत्यर्थः तेनकर्मनाशाजलस्पर्शादिना तस्ययागादेःपूर्वम् कर्मनाशाजलस्पर्शादितःपूर्वं वृत्तित्वादि

अनन्यथासिद्धनियतपूर्ववर्त्तित्वस्यतत्रापिसत्वात् अव्यवहितपूर्ववर्त्तित्वंहि चक्षुःसंयोगादेःकारणत्वेननु सर्वत्रकार्यका
लवृत्तित्वमिवसमवायिकारणस्यकारणत्वेदृश्यत आह कर्मनाशेति यदिहि अपूर्वन्तस्यात्तदाकर्मनाशाजलस्पर्शादिनानाश्य
त्वम्धर्मस्यनस्यात् नहितेनयागादेर्नाशःप्रतिवन्धोवाकर्त्तुंशक्यते तस्यपूर्वमेव वृत्तत्वादितिभावः एतेनदेवताप्रीतेरेवफल

**कर्मनाशाजलस्पर्शादिनानाश्यस्त्वसौमतः १६२ अधर्मोनरकादीनांहेतुर्निन्दितकर्मजः॥६॥**

त्वमित्यपास्तम्गङ्गास्नानादौसर्वत्रदेवताप्रीतेरसंभवाच्च देवतायाश्चेतनत्वेपितत्प्रीतेरनुद्देश्यत्वात् प्रीतेःसुखरूपत्वेनविष्णु
प्रीत्यादौतदसम्भवात् जन्यसुखस्यतत्राभावात् तेनविष्णुप्रीतिजन्यत्वेनपराभिमतस्वर्गादिरेवविष्णुप्रीतिशब्देनलक्ष्यते१६१
।१६२।अधर्मेति नरकादिसकलदुःखानान्नारकीयशरीरादीनाञ्चसाधनमधर्मइत्यर्थः तत्रप्रमाणमाह॥६॥ ७॥७॥

तिउत्पन्नत्वाद्धि नष्टत्वाच्चेत्यर्थः॥योग्यविभुविशेषगुणानांस्वोत्तरोत्पन्नगुणनाश्यत्वादिच्छात्मकयागस्यतृतीयक्षणएवनष्टत्वादितिभावः
।एवमग्रेपिधर्मःक्षरतीत्यस्यधर्मोयागादिःक्षरतिफलभाङ्भवतीत्यर्थःकतयाकर्मनाशाजलस्पर्शादेःस्वध्वंससंव न्धेनस्वर्गादिफलम्प्रति
न्धकत्वमेवयुक्तमितिनसत् एकाश्वमेधानन्तरमश्वमेधःकृतइतिकीर्त्तितेनदुत्तरस्मुनरश्वमेधकरणेपिस्वर्गानुदयापत्तेः॥ नचतदश्वमेधजन्य तम॰
स्वर्गत्वावच्छिन्नम्प्रतितत्कीर्त्तनत्वेनप्रतिवन्धकत्वान्नाश्वमेधान्तरात्स्वर्गानुदयप्रसङ्गइतिवाच्यम्॥ ७॥ ७॥ ॥६॥६॥ २३५

अथ कारिकावलीमुक्तावलीदिनकरीसहितरामरुद्रीप्रारभ्यते॥

ॐ श्रीगणेशाय नमः ॥ तानस्य तर्कसरसीरुहकाननेषु रामेश्वरस्य तरणेश्चरणे प्रणम्य श्रीरामरुद्रसुकृती कृतिनां हिताय लीलावशात्किमपि कौतुकमातनोति १ जाने कदाचिदपि नैव शिवस्वरूपान्मातापुनः परमदैवतमन्यदत्र तस्मादिमां कृतिमिहाघतरङ्गिणी त्वात्पाद्याय तच्चरणयोः परिकल्पयामि २ तरङ्गिणीयं सफलोक्तिवाचो मुदे बुधानां तरसा विदे च भूयात्सदालंनिखिलाण्डभाण्डकीर्तिप्रभाजातविभूतिनाम् ३ सिद्धांतमुक्तावलीव्याख्यां चिकीर्षुर्महादेवः प्रारिप्सितग्रन्थविघ्नविघाताय कृतं नानानमस्काररूपं मङ्गलं शिष्यशिक्षार्थमादौ निबध्नाति लक्ष्मीति गूढार्थास्ततनुते विस्तारयतीत्यर्थः अन्यत्र विस्तारो नाम नानाजनसंबंधः प्रकृते तु स्वविषयकज्ञानवत्त्वमेवेति भावः शिष्या अप्येवं कुर्युरितीति अत्रेतिशब्दस्य उक्ताकारकाभिप्रायो र्थः इतिशब्दस्याव्ययत्वात्तीयांतत्वेन शिष्या अप्येवं कुर्युरित्याकारकाऽ

लक्ष्मीपादयुगं प्रणम्य पितरं श्रीबालकृष्णाभिधं भारद्वाजकुलांबुधौ विधुमिव श्रीगौरवास्यांबुजात् ज्ञात्वा शेषमनंतमिनेन वचसा सिद्धांतमुक्तावलीगूढार्थास्ततनुते यथामति महादेवः परेषां कृते १ तत्र तावद्भाषापरिच्छेदव्याख्या

चूडामणीकृतविधुर्वलयीकृतवासुकिः भवो भवतु भव्याय लीलाताण्डवपण्डितः १॥

नंचिकीर्षुः विश्वनाथपंचाननो निर्विघ्नपरिसमाप्तये कृतस्येश्वरनिर्देशरूपमंगलस्य शिष्या अप्येवं कुर्युरिति शिष्यशिक्षायै निबंधं कुर्वन्नीश्वरं प्रार्थयते चूडामणीकृतेति लीलेति इदं च विशेष्यं नातः समाप्तपुनरात्तत्वदोषः॥ ॥

भिप्रायेणेत्यर्थः पर्यवसितः एतेन शिष्या अप्येवं कुर्युरित्याकारकज्ञानेच्छाशब्दानां शिष्यशिक्षानात्मकतया कुर्युरिति शिष्यशिक्षायै इति ग्रन्थासंगतिः सकर्तव्यत्वेन ज्ञानस्यैव शिक्षाशब्दार्थत्वादितिनिरस्तम् समाप्तपुनरात्तत्वमिति क्रियान्वयेन शांताकांक्षस्य विशेष्यवाचकपदस्य विशेषणान्तरान्वयार्थं पुनरनुसंधानं समाप्तपुनरात्तत्वं काव्यदोषः प्रकृते हि चूडामणीकृतविधुर्वलयीकृतवासुकिः भवो भवतु भव्याय लीलाताण्डवपण्डित इत्यत्र भवो भव्याय भवत्वित्येतावतान्वयबोधे नैव भवपदस्य शांताकांक्षतया उत्तरत्र विद्यमानलीलाताण्डवपण्डितपदस्य

इति विशेषणस्यान्वयार्थं सभवः पुनः कीदृश इत्याकांक्षासंपादनाय भवपदेन भवस्मरणस्यावश्यकत्तया भवति समाप्तपुनरात्तत्वं दोष इति भावः

ननु जातितद्भिन्नप्रवृत्तिनिमित्तकशब्दानां जातिप्रवृत्तिनिमित्तकमेव विशेष्यवाचकमिति नियमः अन्यथा नीलोत्पलमित्यादिवदुत्प
लनीलमित्यादेरपि प्रयोगस्य प्रसंगात् तथाहि समासविधायकसूत्रे यत्प्रथमांतपदं निर्दिष्टं तत्समासे पूर्वं निपततीति नियमः विशे
षणं विशेष्येणेति कर्मधारयविधायकसूत्रे विशेषणवाचकपदस्य प्रथमांतपदनिर्दिष्टत्वात्पूर्वनिपातनियमः नीलोत्पलयोर्विशेषण
विशेष्यभावे नियामकाभावे उत्पलस्य विशेषणत्वविवक्षया उत्पलनीलमिति प्रयोगः स्यादेव तस्माज्जातिप्रवृत्तिनिमित्तकत्वादुत्प
लपदस्य विशेष्यवाचकत्वमेवेत्यवश्यमंगीकरणीयं तथा च शिवशरीरवृत्तिजातिविशेषप्रवृत्तिनिमित्तकस्य भवशब्दस्य विशेषण
परत्वानुपपत्तिः न च भवः सर्वं जानातीति प्रतीत्यनुपपत्तिः अवच्छेदकतासंबंधेन ज्ञानवत्त्वबोधकत्वस्येश्वरज्ञानस्य किंचिदनवच्छि
न्नत्वेन स्वीकर्तुमशक्यत्वादिति वाच्यम् स्वाश्रयावच्छिन्नत्वसंबंधेन तादृशवैजात्यविशिष्टचैतन्यस्यैव भवपदार्थत्वोपगमात् न चैकव्यक्ति

वस्तुतस्तु विधोः किमिति चूडामणीकरणं किमर्थं वा वासुकेर्वलयीकरणमित्याकांक्षायां निराकांक्षप्रति
पत्तिर्न संभवतीति लीलेत्यादिविशेषणानुक्तौ विवक्षितान्वयबोधाभावान्न्यायमत्रदोषः ॥ ॥

कत्वाद्भवत्वं न जातिरिति वाच्यम् कल्पभेदेन शिवशरीरस्यापि भिन्नत्वात् न च भवत्यस्माज्जगदिति व्युत्पत्त्या जगत्कारणत्वमेव भवपद
प्रवृत्तिनिमित्तं न तु जातिविशेष इति वाच्यम् योगाद्रूढेर्बलीयस्त्वादित्यभियुक्तोक्त्या शीघ्रोपस्थितिकरूढ्यर्थमादाय शांताकांक्षान्वयबोधो
त्पत्तौ विलम्बोपस्थितिकयोगार्थमादायान्वयबोधानुपपादनेन समाप्तपुनरात्तत्वदोषस्यावश्यकत्वादित्यत आह वस्तुतस्त्विति इत्याकांक्षाया
मिति सत्यामिति शेषः निराकांक्षा प्रतिपत्तिर्न भवतीति स्वोत्तरानुत्पन्नाकांक्षाकशाब्दबोधो न भवतीत्यर्थः विवक्षितान्वयबोधेति विशेष्यवा
चकपदेन निरुक्तनिराकांक्षान्वयबोधजननोत्तरं विशेषणांतरान्वयार्थं विशेष्यवाचकपदस्य पुनरनुसंधानं समाप्तपुनरात्तत्वमिति सा
माप्तपुनरात्तत्वलक्षणघटकत्वेन विवक्षितो यो निराकांक्षान्वयबोधस्तदभावादित्यर्थः लीलेत्यादिविशेषणानुक्ताविति नेन तादृशविशेष
णोक्तौ तादृशविशेषणासहितेन त[illegible]विवक्षितान्वयबोधो भवतीति सूचितम्॥

नन्वेवं समाप्तपुनरात्तत्वं क्वापिदोषो न स्यात् शाब्दबोधमात्रे आकांक्षायाः प्रयोजकत्वेन विशेषणांतरान्वयार्थं सकीदृश इत्यादि यत्किंचिदाकांक्षायाः कल्पनीयतया क्वापि निराकांक्षाप्रतिपत्तेरसंभवादित्यत आह उत्थाप्याकांक्षेति अनियताकांक्षयेत्यर्थः क्रियाकारकपदानां परस्पराकांक्षानियता पुत्रादिपदानामपि प्रतियोग्याकांक्षा नियता एवं प्रयोजनाकांक्षापि नियतैव प्रयोजनाभावे वाक्यार्थस्यैवासिद्धिप्रसंगात् भवः कीदृश इत्याद्याकांक्षा तु नियता न याच नियताकांक्षारहितान्वयबोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसंधानमेव समाप्तपुनरात्तत्वमिति विवक्षितत्वात् उत्थाप्याकांक्षया विशेषणान्वय एव तत्त्रसरादिति लीलया तांडवं नृत्यं तत्र पण्डितोऽभिज्ञ इत्यर्थः अनेन च नृत्यविशिष्टतया स्मृतिविषयत्वात् प्रार्थितार्थाभवंतेवेति सूचितम् ननु आभूषणरहितस्य कथं नृत्यं तत्राह चूडामणीकृतेति अचूडामणिवत्संपद्यमान इति चूडामणीकृतः चूडामणीकृतो विधुर्येन सतथेत्यर्थः वलयीकृतेति अवलयं वलयं संपद्यते इति वलयीकृतः वलयीकृतो वासुकिर्येन सतथेत्यर्थः शिष्यावधानाय प्रतिजानीते निजनिर्मितेति निजेन स्वेन निर्मिता रचिता या कारिकावली नाम् अतिअ

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरंतनोक्तिभिः ॥ १ ॥

त्यंतं क्षेपः शब्दसंक्षेपो यासु ताः अतिसंक्षिप्तास्ता दृश्यमानाश्चिरंतनानां कणादप्रभृतीनां या उक्तयो वचांसि वचः प्रतिपाद्यायुक्तयस्ताभिरहं विशदीकरवाणि प्रकटीकरोमीत्यर्थः ननु लीलावत्यादि प्राचीननिबंधाध्ययनेनैव कारिकावलीप्रतिपादितोऽर्थो बोद्धव्य इति किमनेन भवत्कृतविशदनिबंधेनेत्यत आह अतिसंक्षिप्तेति तथा च लीलावत्यादि प्राचीननिबंधेषु ग्रंथबाहुल्येन बहुतरदुःखहेतुप्रतिपत्तिकतया न बालानां प्रवृत्तिरिति भावः स्वात्मेक्षामूलकता प्रयुक्तानादरणीयतां निरसितुं चिरंतनेत्युक्तं नन्वित्यवधारणे तथा च कौतुकादेवेत्यर्थः एतेन स्वस्य ग्रंथकरणे क्लेशाभावः सूचितः ॥ ॥ सकीदृश इत्याद्युत्थाप्याकांक्षयाविशेषणांतरान्वयस्थल एव समाप्तपुनरात्तत्वदोष इति भावः चूडामणिरिति विस्मयादभूत तद्भावे इत्यनेन विहितच्वि प्रत्ययात चूडामणिशब्दघटितत्वात् उक्तवाक्यादयमर्थो लभ्यत इति भावः शिष्यावधानायेति शिष्याणामवधानं शुश्रूषा तस्मै इत्यर्थः वक्तव्यार्थस्य विशिष्य ज्ञानेन तत्प्रतिपत्तेरिष्टसाधनत्वाग्रहेण शिष्याणां वाक्यश्रवणेच्छा न संभवति प्रतिज्ञया स्वकारिकावलीव्याख्यातस्य कर्तव्यत्वज्ञाने कारिकावल्यर्थज्ञानरूपेष्टसाधनत्वस्य ग्रन्थकृद्वाक्येषु सुग्रहत्वेन भवत्येव तच्छ्रवणेच्छेति भावः ॥

शव्दसङ्क्षेपइतिसंक्षेपोद्विविधःशव्दसंक्षेपोऽर्थसंक्षेपश्च तत्रार्थसंक्षेपेणग्रंथस्यसकलार्थाप्रतिपादकत्वेवालव्युत्पत्तिजनकतानस्यादित्या
शंक्यसंक्षेपपदस्यप्रकृतेशव्दसंक्षेपमात्रपरत्वमुपदर्शितमितिपद्यस्यातिसंक्षिप्तपदस्यप्रयोजनंप्रकटयन्नाह॰नन्वित्यादि॰स्वोत्प्रेक्षेतिस्व
कीयकल्पनामूलकत्वेत्यर्थः अनेनाऽवधारणेनसज्जातिरूपमितिसामान्यमनुगतधर्ममात्रंतत्रचक्वचिदुपाधिरूपंक्वचिज्जातिरूपंप्रकृतग्रंथे
स्वस्यग्रंथकरणेप्रवृत्तौनि मितमाहराजीवेतिराजीवेशिष्येपादयाकृपातयावशंवदस्तदधीनइत्यर्थः २ ननुग्रंथादौश्रोतृप्रवृत्त
येप्रयोजनादिवक्तव्यंभवतितस्यचेहानुक्तत्वादुपेक्षणीयतैतद्ग्रंथस्यस्यादित्याशंक्यविषयप्रयोजनसंबंधाधिकारिणःसूचयन्न
तिसंक्षिप्तत्वादेतद्ग्रंथस्यसकलपदार्थाप्रतिपादकतयाकथंवालव्युत्पत्तिरित्याशंकांचैतद्ग्रंथस्यसकलपदार्थप्रतिपादकत्वेप्र
दर्शनेनपरिहरन्यत्करोषियदश्नासियज्जुहोषिददासियत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमितिभगवदुक्तेर्मुक्तावलीसमं

विशदीकरवाणिकौतुकान्ननुराजीवदयावशंवदः २ सद्द्रव्यागुणगुम्फितासुकृतिनांसत्क
र्मणांज्ञापिकासत्सामान्यविशेषनित्यमिलिताऽभावप्रकर्षोज्ज्वला ॥ १ ॥ १ ॥

स्वकीयग्रंथंभवतिचार्पयन्स्वकीर्त्यनुवृत्तयेग्रंथस्यस्वस्यचनामनिवध्नातिसद्द्रव्येतिद्रव्यैःसहितायुक्ताप्रतिपादकतयागुणै
रपिगुम्फितायुक्तासतामुत्क्षेपणादीनांपंचानांकर्मणांज्ञापिकाबोधिकासत्जातिरूपंसामान्यंविशेषाःनित्यःसमवायस्तैर्मिलिता
यद्वासंतिसामान्यविशेषनित्यमिलितानियस्यांसानित्यमिलितंनित्यसंबंधःअभावप्रकर्षःप्रागभावादिभेदेनवैलक्षण्यंतस्यउज्वला
प्रकाशिकाएषावुद्धिस्थासिद्धांतारवमुक्तास्तासांआवलीपंक्तिःविष्णोर्नारायणस्यवक्षस्स्थलेविन्यस्ताविशेषतोर्पितासुकृतिनांपण्डिता
नांमनसःमुदंसंतोषंचिरंवहुकालंवितनुतांविस्तारयत्वित्यर्थः॥१॥जातिरूपसामान्यस्यैवनिरूपणीयत्वेनजातिरूपसामान्यलाभायसत्सामान्येतु
क्तमितिभावःननुसदित्यस्यसत्ताविशिष्टार्थकत्वेनसत्पदस्यजातिरूपार्थकत्वंलक्षणयैववाच्यंसामान्यपदमपिशास्त्रकृत्परिभाषयाजातिरूपसामा
न्यएवसुप्रसिद्धम् अन्यथासामान्येसविशेषकमितिमूलेतिरिक्तसामान्यानवनेकविशेषणानुत्पत्त्यामूलकारस्यन्यूनतापत्तेस्सदित्यनर्थकंचे

विपदमनर्थकमितीति इदं चोपसर्गाणां वाचकत्वमताभिप्रायेण अन्यथा तेषां द्योतकत्वपक्षे किंचिदर्थावाचकतया उपसर्गाणां शक्तत्वरूपपदत्वासंभवेन विपदमित्यसंगतमेव स्यात् अत एव समाधाने पि विशिष्टवाचकानां पदानां सति पृथग्विशेषणवाचकपदसमवधाने विशेष्यमात्रपर

ननु पुस्तके नाम त्रासत्वात्कथं विदुषां संतोषस्तत्राह सद्युक्तिरिति सत्यः युक्तयो यस्यां सा तथा मुक्तावलीसादृश्यं ग्रंथे द्रव्यादिपदार्थवत्तया यथा हि मुक्तावली सद्द्रव्यासाध्यतया द्रव्यवतीद्रव्यसाध्येति यावत् नानाविधद्रव्यघटिता वा गुणेन सूत्रेण गुम्फिता निर्मिता सुकृतिनां पुण्यवतां यानि संति समीचीनानि भगवद्भजनादिरूपाणि कर्माणि तेषां बोधिका सत्सामान्यं समीचीना जातिः विशेषो महत्वनिर्मलत्वादिस्ताभ्यां नित्यमनवरतं संबद्धा अभावे तेजोभावे ंधकारे सति प्रकर्षेणोज्वला ऽर्थप्रकाशिकेति यावत् यथा मुक्तावली द्रव्यादिसकलपदार्थवती तथायं ग्रंथोपीति अत्र मुक्तावलीत्वोक्त्या निर्दोषत्वं सूचितम् अत्र द्रव्यादिपदार्थप्रतिपादकत्वप्रदर्शनेन द्रव्यादयो वि॰

विस्तोर्ण्सस्तिविश्वनाथकृतिना सिद्धांतमुक्तावली विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम् ३ विघ्नविघातायकृतं मंगलं शिष्यशिक्षायै निबध्नाति नूतनेति नूतनजलधररुचये गोपवधूटीदुकूलचौराय तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय॥ १ ये पाउक्ताः पदार्थतत्वावधारणं च प्रयोजनं सूचितं संबंधश्च प्रतिपाद्यप्रतिपादकभावः पदार्थतत्वावधारण॰

कामोधिकारीति ग्रंथारंभसमये कृतस्य मंगलस्य तन्निबंधनस्य च वैयर्थ्यमाशंक्य फलं दर्शयति विघ्नविघातायेति प्रारब्धस्येष्टस्य ग्रंथस्येति शेषः यद्यपि अत्र घातपदस्योत्पत्तिमद्भावपरतया विपदमनर्थकमिति प्रतिभाति तथापि विशिष्टवाचकानां पदानां सति पृथक् विशेषणवाचकपदसमवधाने विशेष्यमात्रपरतायाः सकीचकैर्मारुतपूर्णरंध्रैरित्यत्र कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धता इति कोशान्मारुतपूर्णरंध्रत्वविशिष्टवेणुबोधककीचकपदे दृष्टत्वाद्घातपदमभावमात्रपरं द्रष्टव्यम्॥ ॥ ॥

त्वमितिन्यायेन विपद संनिहितघातपदस्य अभावमात्रपरताप्रदर्शनमपि संगच्छते अन्यथा विपदस्य किंचिदर्थावाचकत्वेन विशेषणवाचकत्वसंभवात् विघातपदस्योक्तन्यायविषयता न स्यादिति ध्येयं विशिष्टवाचकपदस्यापि विशेषणबोधकत्वरूपविशेषणवाचकत्वस्याप्यक्षततया तेषां क्वापि विशिष्टवाचकता न स्यादित्यतः पृथगित्युक्तं विशिष्टवाचकपदातिरिक्तमित्यर्थः॥

